# चतुर्थ संस्करण की प्रस्तावना

महाभारत के उद्योग पर्व में राजा धृतराष्ट्र व विदुरजी का संवाद है, जो उच्चकोटि की व्यवहार नीति का एक बहुत बड़ा खजाना कहे जाने के योग्य है। क्योंकि इसका १-१ श्लोक एक २ लाख रुपयों की कीमत में भी सस्ता ही है। इतनी उच्च कोटि की राजनीति समाजनीति व व्यवहारनीति का समावेश कर व्यासजी महाराज ने जगत् का महान् उपकार किया है। श्रीमद्भागवत के तृतीय स्कन्ध में इस विदुर उपदेश ( विदुरनीति ) की बड़ी प्रशंसा की है।

'यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ।
अथाह तन्मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं वदन्ति' ॥

अतएव इस विदुरनीति का घर-घर प्रचार है। अब तो काशीकी प्रथम-परीक्षा में भी इसे पाठ्य रूप से रखा गया है। परन्तु व्यासजी महाराज के श्लोक प्रायः बहुत-गूढ होते हैं, अतः बालकों को उनका भाव समझने में कठिनता होगी ऐसा देखकर हमने राजलक्ष्मी व सरला नामक दो टीकाओं से युक्त इस विदुरनीति का यह राजसंस्करण निकाला है। इसके द्वारा परीक्षार्थियों को बड़ा लाभ होगा। इतनी विस्तृत व सरलटीका अभी तक दूसरी नहीं छपी है। अतः छात्रों को इसकी एक २ प्रति अवश्य पास में रखनी चाहिए।

कथाप्रसङ्ग—

सञ्जय नामक व्यासजी के शिष्य को धृतराष्ट्र ने युधिष्ठिरजी के पास उन्हें समझाने को भेजा था, वह धृतराष्ट्र का सन्देश लेकर युधिष्ठिरजी के पास गया। वहाँ से भगवान् श्रीकृष्ण व युधिष्ठिरजी आदि का प्रतिसन्देश लेकर वह सञ्जय धृतराष्ट्र के पास वापिस आया। और उसने धृतराष्ट्र को बहुत ऊँच नीच समझाया कि--'युधिष्ठिर का राज्य दे दीजिए नहीं तो बड़ी गड़बड़ होगी' इत्यादि। और दूसरे दिन सभा [ दर्बार ] में युधिष्ठिर का सन्देश सुनाने को कहकर विश्राम करने वह [सञ्जय] चला गया। परन्तु मारे चिन्ता के राजा धृतराष्ट्र को उस दिन रात में निद्रा नहीं आई। तब रात्रि में ही आपने अपने मन्त्री महापण्डित विदुरजी को मन्त्रणा [ सलाह ] के लिए बुलाकर धृतराष्ट्र ने यह उपदेश विदुरजी से सुना है। अतः इसका नाम प्रजागर पर्व भी है। वही उपदेश विदुरनीति इस नाम से ८ अध्यायों में है। उसमें से २ अध्यायों का प्रथम परीक्षोपयोगी खण्ड यह है।

अ० आ० कृ० ४. १९९६
आषाढकृ. ५ सो. १९९७
ज्येष्ठ कृ० ६ १९९८

निवेदक—
श्रीगुरुप्रसादशास्त्री।

श्रीमहागणपतये नमः ।

# विदुरनीतिः ।

## राजलक्ष्मी-भाषा-टीकाभ्यां विराजिता

---

## अथादावुपोद्घातः

श्रीवैशम्पायन उवाच—

**द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।**
**'विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम्' ॥१॥**

---

श्रीगुरुप्रसादशास्त्रिसङ्कलिता

### सरला

नत्वा महागणपतिं श्रीव्यासं शारदां गुरून् ।
टीकां विदुरनीतेस्तु सरलां वितनोम्यहम् ॥

[अन्वयः] महाप्राज्ञः धृतराष्ट्रः महीपतिः "विदुरं द्रष्टुमिच्छामि, तम् इह आनय, मा चिरम् ( कार्षीः" इति ) द्वाःस्थम् प्राह ॥ १ ॥

[ विग्रहः ] द्वारि तिष्ठतीति द्वाःस्थः, तं-द्वाःस्थम् । शोभना प्रज्ञाऽस्ति यस्यासौ प्राज्ञः । महांश्चासौ प्राज्ञश्च महाप्राज्ञः । धृतं राष्ट्रं येनासौ धृतराष्ट्रः । पातीति पतिः । मह्याः पतिः-महीपतिः । वेत्ति तच्छीलो विदुरः, तं-विदुरम् ।

[अर्थः] महाप्राज्ञः-बुद्धिमतां वरिष्ठः । सर्वशास्त्रार्थतत्त्वज्ञः,

परमपण्डितो, नीतिवेदी, व्यवहारपटुश्च। धृतराष्ट्रः-धृतराष्ट्रनामा। महीपतिः-राजा। कौरवाधिपः। 'विदुरं=विदुरनामकं महाप्राज्ञं मन्त्रिणं स्वभ्रातरञ्च। द्रष्टुमिच्छामि=अहं विलोकयितुमिच्छामि। वयं दिदृक्षामहे। (अतः) तं=विदुरम्। इह=मत्सन्निधे। इह राजप्रासादे। आनय=प्रापय। हे द्वाःस्थ! मा चिरं=विलम्बं मा कार्षीः। [इति=इत्थं] द्वाःस्थं=द्वारपालं। राजपुरुषम्। प्राह=उवाच। आज्ञापयामास॥ १॥

[ कोशः ] 'विदुरो नागरे धीरे कौरवाणाञ्च मन्त्रिणि' इति मेदिनी।

[ भाषाटीका ] वैशम्पायनजी ने राजा जनमेजय से कहा—सकल शास्त्रों को जाननेवाले कौरवाधिपति महाराज धृतराष्ट्र ने द्वारपाल ( पहरेदार सिपाही ) को आज्ञा दी कि—"मैं महामन्त्री विदुर को अभी देखना चाहता हूँ, अतः उन्हें शीघ्र मेरे पास लाओ। देखो—देरी न हो"॥ १॥

**प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत्।**
**'ईश्वरस्त्वां महाराजो महाप्राज्ञ! दिदृक्षति'॥२॥**

[ अन्वयः ] धृतराष्ट्रेण प्रहितः दूतः—"हे महाप्राज्ञ! ईश्वरः महाराजः त्वां दिदृक्षति" (—इति) क्षत्तारम् अब्रवीत्॥ २॥

[ विग्रहः ] ईष्टे इतीश्वरः। महांश्चासौ राजा च महाराजः। शोभना प्रज्ञाऽस्त्यस्य-प्राज्ञः, महांश्चासौ प्राज्ञश्च महाप्राज्ञः। तत्सम्बुद्धौ-हे महाप्राज्ञ! द्रष्टुमिच्छति दिदृक्षति। छान्दसमेतत्। 'दिदृक्षते' इति तु लोके भाव्यम्॥२॥

[ अर्थः ] धृतराष्ट्रेण=राज्ञा धृतराष्ट्रेण। प्रहितः-प्रेपितः। विदुरमाकारयितुं प्रस्थापितः। दूतः=द्वाःस्थो राजपुरुषः। क्षत्तारं=विदुरम्। 'महाप्राज्ञ!=बुद्धिमतां श्रेष्ठ!। हे महामते! विदुर!। महाराजः=राजराजेश्वरः। ईश्वरः-निग्रहानुग्रहसमर्थो राजा धृतराष्ट्रः। त्वां=भवन्तम्। दिदृक्षति=द्रष्टुमिच्छति'। दिदृक्षते। [ इति=इत्थम् ]। अब्रवीत्=अगादीत्॥ २॥

[ कोशः ] 'क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान्'। इति मेदिनी।

[ भाषाटीका ] महाराज धृतराष्ट्र का भेजा हुआ वह दूत ( द्वारपाल ) विदुर

के पास जाकर बोला कि-हे विद्वानों में श्रेष्ठ विदुर जी ! महाप्रतापी राजाधिराज धृतराष्ट्र आपको देखना चाहते हैं । अर्थात् आपसे मिलना चाहते हैं, अतः कृपया शीघ्र ही चलिए ॥ २ ॥

एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय ॥ ३ ॥

[ अन्वयः ] एवमुक्तः विदुरः तु राजनिवेशनं प्राप्य धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय ( इति द्वाःस्थम् ) अब्रवीत् ॥ ३ ॥

[ विग्रहः ] राज्ञो निवेशनं, राजनिवेशनं, तत्--राजनिवेशनम् । द्वारि तिष्ठतीति द्वाःस्थः, तं=द्वाःस्थम् ॥ ३ ॥

[अर्थः] एवमुक्तः=दूतमुखेन राज्ञा समाहूतः। दूतेनैवमुक्तः। विदुरस्तु=महाप्राज्ञो विदुरस्तु । राजनिवेशनं=कौरवराजभवन-द्वारम् । राजप्रासादप्रतीहारम् । प्राप्य=सम्प्राप्य । समागम्य । धृतराष्ट्राय=महाराजाय धृतराष्ट्राय । द्वाःस्थं=द्वारि स्थितम् । मां=विदुरं । सम्प्राप्तं, द्वारिप्रतीक्षमाणञ्च । मां=विदुरं प्रतिवेदय=निवेदय । आख्याहि । विदुरो द्वारि तिष्ठतीति कथयेति यावत् । [ इति=इत्थं द्वाःस्थं=द्वारपालम् ] । अब्रवीत्=प्रण्यगदत् ॥ ३ ॥

[ भाषाटीका ] इस प्रकार राजदूत से राजाज्ञा को सुनकर विदुर जी राजमहल को चले । और राजमहल के दरवाजे पर आकर द्वारपाल से बोले-महाराज धृतराष्ट्र से निवेदन करो, कि-"आपकी आज्ञा की प्रतीक्षा में विदुर राजद्वार पर खड़े हैं" । अर्थात् हमारे आने की सूचना महाराज धृतराष्ट्र को दो ॥ ३ ॥

द्वाःस्थ उवाच—

विदुरोऽयमनुप्राप्तो राजेन्द्र ! तव शासनात् ।
द्रष्टुमिच्छति ते पादौ, किं करोतु प्रशाधि माम् ॥ ४ ॥

[ अन्वयः ] राजेन्द्र ! तव शासनात् अयं विदुरः अनुप्राप्तः ते पादौ द्रष्टुमिच्छति । ( स ) किं करोतु ? । ( इति ) मां प्रशाधि ।

[ विग्रहः ] राज्ञामिन्द्रः राजेन्द्रः, तत्सम्बुद्धौ हे राजेन्द्र ! ।

[ अर्थः ] राजेन्द्र=हे महाराज ! । तव=भवतः । शासनात्=

आदेशात्। अयं विदुरः=विदुरोऽयं महाभागः । अनुप्राप्तः= राजभवनं सम्प्राप्तः । प्रासादद्वारि च तिष्ठति । ते=तव । पादौ= चरणौ च । द्रष्टुमिच्छति=दिदृक्षते । भवद्दर्शनं वाञ्छति । (सः) किं करोतु=किं विदधातु ? । तिष्ठतु वा, आगच्छतु वा, गच्छतु वा, अवसरं प्रतिपालयतु वेति यावत् । (इति) मां=द्वारपालं माम् । प्रशाधि=अनुशाधि । आज्ञापय । विदुराय यदुत्तरं देयं तन्मां समाज्ञापयेति यावत् ।

[ भाषाटीका ] द्वारपाल ने महाराज धृतराष्ट्र से जाकर कहा कि हे राजेन्द्र ! आपकी आज्ञा के अनुसार महामति विदुरजी राजमहल के द्वार पर आकर उपस्थित हुए हैं और आपके चरणों का दर्शन करना चाहते हैं । कहिए उनके लिए क्या आज्ञा होती है ? ॥ ४ ॥

धृतराष्ट्र उवाच—

**प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।**
**अहं हि विदुरस्याऽस्य नाऽकल्पो जातु दर्शने ॥ ५ ॥**

[ अन्वयः ] महाप्रज्ञं दीर्घदर्शिनं विदुरं प्रवेशय । हि अहम् अस्य विदुरस्य दर्शने जातु न अकल्पः ( अस्मि ) ।

[ विग्रहः ] महती प्रज्ञा यस्यासौ महाप्रज्ञः, तं महाप्रज्ञम् । दीर्घं पश्यति तच्छीलः-दीर्घदर्शी, तं दीर्घदर्शिनम् । न कल्पः-अकल्पः ।

[ अर्थः ] महाप्रज्ञं=महामतिम् । 'धीः प्रज्ञा, शेमुषी मति'- रित्यमरः । दीर्घदर्शिनं=दूरदर्शिनम् । तीक्ष्णबुद्धिं । विचारशी- लम् । विदुरं=क्षत्तारम् । प्रवेशय=अन्तःपुरे एव प्रवेशय । हि= यतः । अहम्=प्रभुरपि । अस्य विदुरस्य=महामतेरस्य विदुरस्य । दर्शने=विलोकने । तस्मै स्वदर्शनस्य दाने वा । जातु=कदाचि- दपि । सर्वदैव । न अकल्पः=न असमुत्सुकः । असमर्थो वा न । किन्तु सर्वदैव समर्थः । विदुरदर्शनं मम कदापि न प्रत्याख्ये- यमित्यर्थः । बहिरन्तःपुरे वा सर्वदा विदुरं द्रष्टुं सन्नद्धोऽ- स्मीति यावत् ।

[ भाषाटीका ] धृतराष्ट्र कहने लगे—महामति, दीर्घदर्शी, विचारशील विदुरजी को शीघ्र ही भीतर ( यहाँ अन्तःपुर में ही ) ले आवो। क्योंकि विदुरजी से मिलने के लिये मैं सर्वदा तैयार हूँ। अर्थात् उनके लिये यहाँ अन्तःपुर में भी कोई रोक-टोक नहीं है। उनके लिये सर्वदा ही अवसर है ॥ ५ ॥

द्वाःस्थ उवाच—

**प्रविशाऽन्तःपुरं क्षत्तर्महाराजस्य धीमतः।**
**न हि ते दर्शनेऽकल्पो जातु राजाऽब्रवीद्धि माम् ॥ ६ ॥**

[ अन्वयः ] हे क्षत्तः ! धीमतः महाराजस्य अन्तःपुरं प्रविश। हि 'ते दर्शने जातु अकल्पः न' [ इति ] राजा माम् अब्रवीत्।

[ विग्रहः ] महांश्चासौ राजा च महाराजः, तस्य महाराजस्य। पुरस्याऽन्त इति अन्तःपुरम्। तथाभूतम्।

[ अर्थः ] क्षत्तः !=हे विदुर ! धीमतः=बुद्धिमतः। महाराजस्य=राजेन्द्रस्य धृतराष्ट्रस्य। अन्तःपुरम्=अवरोधमेव। प्रविश=सन्निविश। प्रयाहि। हि=यतः। ते=तव। दर्शने=प्रेक्षणे। (राजा) अकल्पः=असमर्थः। अयोग्यः। न=नैव। (इति) राजा=महाराजः। मां=मां द्वारपालं प्रति। अब्रवीत्=प्रण्यगदत्।

[ कोशः ] 'राज्ञामन्तःपुरञ्च तत्। शुद्धान्तश्चावरोधश्चे'त्यमरः। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथि'रित्यमरः।

[ भाषाटीका ] तब उस द्वारपाल ने विदुरजी से आकर कहा कि हे विदुरजी, आप महामति राजा धृतराष्ट्र के महल ( जनानखाना ) में चलिए क्योंकि महाराज ने मुझसे कहा है कि वे आपसे मिलने के लिए सर्वदा सनद्ध हैं।

[ कल्प-तैयार, योग्य या समर्थ ] ॥ ६ ॥

वैशम्पायन उवाच—

**ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम्।**
**अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७ ॥**

[ अन्वयः ] ततः विदुरः धृतराष्ट्रनिवेशनं प्रविश्य चिन्तयानं नराधिपं प्राञ्जलिः ( सन् ) वाक्यम् अब्रवीत्।

[विग्रहः] धृतराष्ट्रस्य निवेशनं धृतराष्ट्रनिवेशनम्। तत् धृतराष्ट्रनिवेशनम्। प्रकृष्टोऽञ्जलिर्यस्यासौ प्राञ्जलिः। चिन्तयते इति चिन्तयानः, तं-चिन्तयानम्। नराणामधिपः, नराधिपः तं-नराधिपम्।

**[ अर्थः ] ततः=तदनन्तरम्। दूतवाक्यश्रवणानन्तरम्। विदुरः=क्षत्ता। धृतराष्ट्रनिवेशनं=कौरवराजधृतराष्ट्रभवनम्। प्रविश्य=सम्प्राप्य। प्राञ्जलिः=बद्धाञ्जलिपुटः सन्। विनयावनतशिरोविन्यस्तहस्तयुगलः सन्। चिन्तयानं=चिन्तातुरम्। नराधिपं=धृतराष्ट्रं नाम राजानम्। अब्रवीत्=इत्थमुवाच।**

[ कोशः ] 'तौ युतावञ्जलिः पुमान्' इत्यमरः।

[ भाषाटीका ] वैशम्पायनजी राजा जनमेजय से बोले दूत की बातें सुनकर [धृतराष्ट्र की आज्ञा पाकर] विदुरजी-धृतराष्ट्र के अन्तःपुर में गए। और चिन्तातुर उस राजा धृतराष्ट्र से हाथ जोड़ नम्रतापूर्वक यों कहने लगे-॥ ७ ॥

**विदुरोऽहं महाप्राज्ञ ! सम्प्राप्तस्तव शासनात्।**
**यदि किञ्चन कर्तव्यमयमस्मि प्रशाधि माम्॥ ८ ॥**

[ अन्वयः ] महाप्राज्ञ ! तव शासनात् अहं विदुरः सम्प्राप्तः। यदि किञ्चन कर्त्तव्यम् [ अस्ति ] अयम् अस्मि, मां प्रशाधि।

[ विग्रहः ] सम्यक् प्राप्तः-सम्प्राप्तः। कर्त्तुं योग्यं कर्त्तव्यम्।

**[ अर्थः ] महाप्राज्ञ=हे महामते !। तव शासनात्=भवदाज्ञया। अहं विदुरः=नाम्ना विदुरोऽहम्। सम्प्राप्तः=भवत्सकाशमायातोऽस्मि। यदि=चेत्। किञ्चन=किमपि मया। कर्त्तव्यं=करणीयम्। मत्करणयोग्यं कार्यम्। अस्ति=वर्त्तते तर्हि। अयमस्मि=अयमहमुपस्थितोऽस्मि। कार्यं कर्तुं सर्वथा सन्नद्धोऽस्मि। मां-प्रशाधि=आज्ञापय। कार्येषु निःशङ्कं मां नियोजयेत्यर्थः।**

[ भाषाटीका ] हे महाराज ! मैं विदुर आपकी आज्ञा पाकर सेवा में उपस्थित हुआ हूँ। यदि मेरे लायक कोई कार्य हो तो मैं सेवा में उपस्थित हूँ, आज्ञा प्रदान कर मुझे अनुगृहीत करें॥ ८ ॥

धृतराष्ट्र उवाच—

**सञ्जयो विदुर ! प्राप्तो गर्हयित्वा च मां गतः ।**
**अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥**

[ अन्वयः ] विदुर ! सञ्जयः प्राप्तः, च मां गर्हयित्वा गतः । सभामध्ये सः अजातशत्रोः वाक्यं श्वः वक्ष्यति ।

[ विग्रहः ] न जाताः अजाताः, अजाताः शत्रवो यस्यासावजातशत्रुः । तस्य–अजातशत्रोः । सभाया मध्यं सभामध्यं, तस्मिन्–सभामध्ये ।

[अर्थः] विदुर=हे विदुर ! । सञ्जयः=सञ्जयनामा युधिष्ठिरं प्रति मया प्रेषितो दूतः । प्राप्तः=अद्य राजसभायां मत्सविधे समायातः । च=पुनः । मां=धृतराष्ट्रं । गर्हयित्वा=नानाविधैरुच्चावचैर्वाक्यैरधिक्षिप्य । गतः=स्वस्थानं गतः । किञ्च सभामध्ये=राजसभामध्ये । सः=सञ्जयः । अजातशत्रोः=युधिष्ठिरस्य । वाक्यं=सन्देशवचनम् । वाचिकम् । श्वः=आगामिनि दिवसे । प्रभाते । वक्ष्यति=कथयिष्यति ।

[ भाषाटीका ] तब धृतराष्ट्र बोले–हे विदुर ! युधिष्ठिर का सन्देश लेकर सञ्जय वापिस आया है । आज तो वह राजसभा ( दर्बार ) में मुझे बुरा-भला कह कर अपने विश्रामस्थान ( अतिथिशाला ) को चला गया । पर कल वह राजसभा ( दर्बार ) में उपस्थित हो मुझे युधिष्ठिर का सन्देश सुनावेगा ॥ ९ ॥

**तस्याऽद्य कुरुवीरस्य न विज्ञातं वचो मया ।**
**तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १० ॥**

[ अन्वयः ] तस्य कुरुवीरस्य वचः अद्य मया न ज्ञातम्, तत् मे गात्राणि दहति । तत् प्रजागरम् अकार्षीत् ।

[विग्रहः] कुरुषु वीरः कुरुवीरः, तस्य–कुरुवीरस्य । अस्मिन् अहनीति–अद्य । अज्ञायीति–ज्ञातम् । विशेषेण ज्ञातं विज्ञातम् । जागरणं जागरः । प्रकर्षेण जागरः–प्रजागरः, तं–प्रजागरम् ।

[अर्थः] तस्य=प्रसिद्धस्य । पूर्वोक्तस्य वा । कुरुवीरस्य=कौरवश्रेष्ठस्य युधिष्ठिरस्य । सञ्जयस्य वा । वचः=वाक्यम् । अद्य=अस्मि-

ञेवाऽहनि। सम्प्रतीति वा। मया-न विज्ञातं=नावगतम्। युधिष्ठिरः सञ्जयमुखेन किमभिधास्यतीत्यद्यैव मया यन्नाववुद्धम्। तत्=युधिष्ठिरसन्देशाऽज्ञानम्। मे=मम। गात्राणि=शरीरावयवान्। शरीरं वा। 'गात्रं वपुः संहनन'मित्यमरः। दहति=सन्तापयति। तत्=तदेव च युधिष्ठिरवाक्याऽज्ञानं कर्तृभूतम्। प्रजागरं-मम निद्राक्षयञ्च। अनिद्राम्। अकार्षीत्=व्यधत्त। तच्चिन्तया च मया रात्रावद्य निद्रा न लभ्यते इत्याशयः।

[ भाषाटीका ] कुरुवों में श्रेष्ठ युधिष्ठिर के सन्देश ( वक्तव्य ) को—जिसे सञ्जय कल राजसभा में सुनाएगा—मैं आज ही नहीं जान सका इससे मेरा मन और शरीर चिन्ता के मारे जल रहे हैं। इस चिन्ता के कारण ही मुझे आज रात्रि में निद्रा भी नहीं आ रही है। मैं पड़ा २ करवट बदल रहा हूँ। [ शरीर=शरीरस्थ इन्द्रियाँ ] ॥ १० ॥

**जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि।**
**तद्ब्रूहि त्वं हि नस्तात! धर्मार्थकुशलो ह्यसि ॥ ११ ॥**

[ अन्वयः ] तात! जाग्रतः दह्यमानस्य (मे) श्रेयः यत् अनुपश्यसि तत् ब्रूहि। हि त्वं नः धर्मार्थकुशलः—हि असि।

[ विग्रहः ] दह्यते इति दह्यमानः, तस्य-दह्यमानस्य। धर्मश्च अर्थश्च धर्मार्थौ। धर्मार्थयोः कुशलः—धर्मार्थकुशलः।

[ अर्थः ] तात!=हे भ्रातः! हे विदुर!। जाग्रतः=निद्रामलभमानस्य। निद्रासुखमनासादयतः। अत एव-दह्यमानस्य=चिन्तादहनज्वालावलीढस्य। चिन्तातुरस्य। (मे=मम) श्रेयः=कल्याणसाधनं। हितावहम्। यत्=यत्किञ्चित्। उपदेशसान्त्ववाक्यादिकम्। अनुपश्यसि=भावयसि। जानासि। तद्ब्रूहि=तत्कथय। हि=यतः। त्वं=भवान्। नः=अस्माकं मध्ये। अस्मद्वंशे वा धर्मार्थकुशलः[1]=धर्मार्थतत्त्ववित्। उचितानुचितविधान-

---

१ यद्वा—त्वं नः=अस्माकम्। 'हितैषी, शुभचिन्तकोऽसि' इति शेषः। किञ्च—धर्मार्थकुशलोऽपि ह्यसीत्यर्थः।

ज्ञः। कार्याऽकार्यविवेकचतुरः । हि=निश्चयेन। असि=भवसि ।

[ कोशः ] 'तातोऽनुकम्प्ये जनके' इति मेदिनी । 'तातस्तु जनकः पिता' इत्यमरः ।

[भाषाटीका] हे विदुर ! मुझे आज निद्रा नहीं आ रही है और तीव्र चिन्ता के कारण मैं पलङ्ग पर पड़ा २ जल रहा हूँ। मेरे कल्याण के लिए जो कुछ तुम उचित समझो सो कहो। अर्थात् जिससे मुझे शान्ति मिले ऐसा उपदेश दो। क्योंकि हमारे कुल में तुम धर्म और अर्थ के तत्त्व को जाननेवाले हो ॥ ११ ॥

**यतः प्राप्तः सञ्जयः पाण्डवेभ्यो**
**न मे यथावन्मनसः प्रशान्तिः ।**
**सर्वेन्द्रियाण्यप्रकृतिं गतानि**
**'किं वक्ष्यती'त्येव मेऽद्य प्रचिन्ता ॥ १२ ॥**

[अन्वयः] सञ्जयः पाण्डवेभ्यः यतः प्राप्तः (ततः) मे मनसः यथावत् प्रशान्तिः न । ( किञ्च मम ) सर्वेन्द्रियाणि अप्रकृतिं गतानि । अद्य ( सञ्जयः श्वः—) किं वक्ष्यति इति एव मे प्रचिन्ता ( वर्तते ) ।

[विग्रहः] प्रकृष्टा शान्तिः प्रशान्तिः। सर्वाणि च तानीन्द्रियाणि च सर्वेन्द्रियाणि। न प्रकृतिः अप्रकृतिः, ताम् अप्रकृतिम्। प्रकर्षेण चिन्ता प्रचिन्ता ।

[ अर्थः ] सञ्जयः=व्यासशिष्यः सर्वार्थदर्शी सञ्जयः । पाण्डवेभ्यः=युधिष्ठिरादिभ्यः सकाशात् । यतः=यत आरभ्य । यस्माद्धेतोर्वा। प्राप्तः=इह समायातः । अस्मत्सन्निधिं प्राप्तः। (तत आरभ्य) मे=मम। मनसः=चित्तस्य। यथावत्=यथोचिता। प्रशान्तिः=स्थैर्यम् । उपशान्तिः। न=नैवास्ति । ( किञ्च-मम ) सर्वेन्द्रियाणि=चक्षुरादीनि सर्वाणीन्द्रियाणि । अप्रकृतिम्=अस्वास्थ्यम्। अस्थैर्यम्। गतानि=प्राप्तानि। स्वस्वविषयपराङ्मुखानि जातानि। अद्य=इदानीन्तु। (सञ्जयः श्वः-) किं वक्ष्यति=किमभिधास्यति। इत्येव=इयमेव केवलं। मे=मम मनसि। प्रचिन्ता=महती चिन्ता। [ वर्त्तते इति शेषः ]।

[भावार्थः] पाण्डवस्कन्धावारात्परावृत्तः सञ्जयः प्रभाते सभायां किंवक्ष्यती-

स्यैव खलु-महती चिन्ता मे वर्त्तते । तदेवं चिन्तातुरस्य च मे नयनयोर्निद्रा नावतिष्ठते, चिन्ता ज्वालयाऽङ्गानीन्द्रियाणि च प्रकामं दह्यन्ते । अस्वस्थ इवाहमात्मानं लक्षये । तत्त्वं विदुर ! किमपि हितावहं वाक्यं वद येनाहं शान्तिमधिगच्छामि ।

[ भाषाटीका ] हमारा भेजा हुआ दूत सञ्जय पाण्डवों के पाससे प्रतिसन्देश लेकर वापिस आया है—यह जानकर ही मेरे मन में अशान्ति हो रही है। सभी इन्द्रियाँ अस्वस्थ व चञ्चल हो रही हैं । वह कल-राजसभा में युधिष्ठिर का क्या सन्देश कहेगा—यही एक बहुत बड़ी चिन्ता मुझे कष्ट दे रही है ॥ १२ ॥

विदुर उवाच—

**अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।**
**हृतस्वं, कामिनं, चोरमाविशन्ति प्रजागराः ॥ १३ ॥**

[ अन्वयः ] बलवता अभियुक्तं हीनसाधनम् दुर्बलम्, हृतस्वं, कामिनं, चोरं ( च ) प्रजागराः आविशन्ति ।

[ विग्रहः ] अभियुज्यते स्म इति अभियुक्तः, तम् अभियुक्तम् । प्रकृष्टं बलमस्यास्तीति बलवान्, तेन—बलवता । दुष्टं बलं यस्यासौ दुर्बलः । तं—दुर्बलम् । हीनानि साधनानि यस्यासौ हीनसाधनः, तं—हीनसाधनम् । हृतं स्वं यस्यासौ हृतस्वः, तं—हृतस्वम् । प्रकृष्टः कामोऽस्यातीति कामी, कामयते इति वा कामी । तं कामिनम् । प्रकृष्टा जागराः—प्रजागराः ।

[अर्थः] बलवता=प्रकृष्टबलेन रिपुणा । अभियुक्तं—समाक्रान्तम् । पीडितम् । हीनसाधनम्=तुच्छोपकरणम् । स्वल्पसैन्यम् । अतएव शक्तिविकलम् । अतएव च—दुर्बलम्=निर्बलम् । (किञ्च—) हृतस्वं=राजादिना हृतसर्वस्वम् । अपहृतधनम् । (किञ्च) कामिनं= कामातुरम् । प्रियाविषयकचिन्तातुरं कामुकम् । ( किञ्च ) चोरं= चौरम् । पाटच्चरम् । प्रजागराः=अनिद्राद्युपद्रवाः । आविशन्ति= पीडयन्ति । आकुलीकुर्वन्ति ।

[ भावार्थः ] बलवता समाक्रान्तो हीनशक्तिर्निर्बलः पुमान् यथावद्रात्रौ निद्रां न लभते । किञ्च हृतस्वो वा, कामी वा, चोरो वा रात्रौ जागर्त्ति, नैव-च सुखं निद्रां भजते ।

[ भाषाटीका ] तब विदुर जी कहने लगे—बलवान् शत्रु ने जिसपर आक्रमण कर दिया है ऐसे [ सेना आदि ] साधन रहित। कमजोर राजा को निद्रा नहीं आती। और जिसका धन राजा ने या डाकुओं ने ले लिया है उनको भी निद्रा नहीं आती है। इसी प्रकार कामी पुरुष को या चोर को भी रात में निद्रा नहीं आती है। अर्थात् इनकी रात बेचैनी-चिन्ता-से जागते ही बीतती है ॥ १३ ॥

**कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप!।**
**कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे? ॥ १४ ॥**

[ अन्वयः ] ( हे ) नराधिप! एतैः महादोषैः न स्पृष्टः असि कच्चित्?। न परवित्तेषु गृध्यन् न परितप्यसे कच्चित्?।

[ विग्रहः ] महान्तश्च ते दोषाश्च महादोषाः, तैः महादोषैः। नराणामधिपः, नराधिपः। तत्सम्बुद्धौ हे नराधिप। परेषां वित्तानि परवित्तानि। तेषु-परवित्तेषु।

[ अर्थः ] हे नराधिप=हे राजन्। एतैः=पूर्वोक्तैः ( बलवदभियुक्तत्व-हीनसाधनत्व-दुर्बलत्व-हृतस्वत्व-कामित्व--चोरत्वादिभिः )। महादोषैः=महादूषणैः। दुर्गुणैः। न स्पृष्टोऽसि कच्चित्=नाक्रान्तोऽसि कच्चित्। न दूषितोऽसि कच्चित्?। च=पुनः। किञ्च। परवित्तेषु=परधनेषु। गृध्यन्=तेभ्यः स्पृहयन् सन्। परस्वमभिलष्यन् सन्। न परितप्यसे कच्चित्=न परिपीड्यसे कच्चित्?।

[भावार्थः] राजन्! कथं न सुखं स्वपिषि, तत्-बलवदभियुक्तत्वादिभिर्दूषणैराक्रान्तोऽसि किम्?। परधनपरदारादिकमभिवाञ्छन्नहर्निशं नु सन्तप्यसे किम्?। तद्वद्—किंनु खलु कारणं येन त्वं निद्रां नाधिगच्छसि?।

[ कोशः ] 'कच्चित्कामप्रवेदने' इत्यमरः।

[ भाषाटीका ] महाराज! क्या आपको बलवान् शत्रु से आक्रान्त होना आदि पूर्वोक्त दोष तो नहीं लग गए?। या आप किसी दूसरे के धन को हर लेने की इच्छा से तो सन्तप्त नहीं हो रहे हैं ॥ १४ ॥

धृतराष्ट्र उवाच—

**श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।**
**अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५ ॥**

[अन्वयः] [हे विदुर] परं नैःश्रेयसं धर्म्यं ते वचः श्रोतुमिच्छामि । हि अस्मिन् राजर्षिवंशे त्वम् एकः प्राज्ञसम्मतः [असि] ।

[ विग्रहः ] धर्मादनपेतं धर्म्यम् । तत्तथाभूतम् । निश्चितं श्रेयो निःश्रेयसम् । निःश्रेयसस्येदं नैःश्रेयसम्, तत्तथाभूतम् । राजानश्च ते ऋषयश्च राजर्षयः । राजसु ऋषय इव वा राजर्षयः । राजर्षीणां वंशः–राजर्षिवंशः, तस्मिन् राजर्षिवंशे । प्रशस्ता प्रज्ञा येषां ते प्राज्ञाः । प्राज्ञेषु संमतः–प्राज्ञसंमतः ।

[ अर्थः ] [ हे विदुर ] परं=सर्वतो भावेनोत्कृष्टम् । नितराम् । धर्म्यं=धर्मानुगतम् । धर्ममार्गप्रदर्शकम् । नैःश्रेयसं=परमकल्याणसाधनभूतम् । ते=तव । वचः=उपदेशवाक्यम् । श्रोतुमिच्छामि=आकर्णयितुं वाञ्छामि । हि=यतः । अस्मिन्=जगति=प्रसिद्धे कौरवे । राजर्षिवंशे=राजर्षिकुले । त्वम्-भवानेव । एकः मुख्यः । प्राज्ञसंमतः=विद्वत्पूजितः । तत्त्ववित्सत्कृतः । असि ।

[ कोशः ] 'निःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शिवम्' इत्यमरः । 'वंशोऽन्ववायः सन्तानः' इत्यमरः ।

[ भाषाटीका ] तब धृतराष्ट्र कहने लगे—हे विदुर ! आपके परम हितकारी धर्ममार्ग प्रदर्शक वचनों को जो निश्चित ही हमारे मङ्गल और कल्याण के करने वाले हैं–मैं सुनना चाहता हूँ । क्योंकि हमारे इस राजर्षिवंश ( कौरवकुल ) में केवल आपही सर्व श्रेष्ठ व विद्वानों में मान्य हैं ॥ १५ ॥

[ इति विदुरनीतेरुपोद्घातः ]

# [अथ] विदुरनीतिः प्रारभ्यते

विदुर उवाच—

**राजलक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत् ।**
**प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र ! युधिष्ठिरः ॥ १६ ॥**

[अन्वयः] हे धृतराष्ट्र ! ते प्रेष्यः [अपि, त्वया वनं] प्रेषितश्चैव राजलक्षणसम्पन्नः युधिष्ठिरः त्रैलोक्यस्य अधिपः भवेत् (एव) ।

[ विग्रहः ] राज्ञां लक्षणानि राजलक्षणानि, राजलक्षणैः सम्पन्नः-राजलक्षणसम्पन्नः । त्र्यवयवो लोकः—त्रिलोकः । त्रिलोक एव त्रैलोक्यम् इति विग्रहः । तस्य—त्रैलोक्यस्य । प्रेषितुं पालयितुं योग्यः प्रेष्यः ।

**[ अर्थः ] हे धृतराष्ट्र । ते=तव । प्रेष्यः = अवेक्षणीयः । त्वया परिपालनार्होऽपि । [ विपरीतं त्वया वनं ] प्रेषितश्चैव=त्वया वने निष्कासितः । राज्यादवरोपितः । राजलक्षणसम्पन्नः=चक्रवर्त्ति चिह्नपद्मादियुक्तः । युधिष्ठिरः=धर्मपुत्रः पाण्डवः । त्रैलोक्यस्य= भूर्भुवःस्वरात्मकत्रिलोक्या अपि । अधिपः=प्रभुः । स्वामी । भवेत्=नूनं भविष्यति ।**

[ भाषाटीका ] हे धृतराष्ट्र ! युधिष्ठिर—जो आपके भाई का पुत्र होने के कारण आपके द्वारा पालन-पोषण व रक्षा करने के योग्य था परन्तु जिसे आपने राज्य से च्युत करके १२ वर्ष वनवास के लिए जङ्गलों में भेज दिया था वह तीनों लोक का ( सम्पूर्ण भूमण्डल का ) राजा बनेगा—यह निश्चय है क्योंकि चक्रवर्त्ती

---

१ प्रेष्य इति । ईष धातोर्ऋहलोरिति ण्यति ईष्य इति रूपम् । ततः प्रकर्षेण एष्यः प्रेष्य इति रूपम् । प्रेष्यः=भृत्यः । मृतपितृकया दयापात्रत्वात्, भृत्यवत्परिपालनीयत्वाच्च भ्रातृष्पुत्रो युधिष्ठिरोऽपि प्रेष्य इत्युच्यते ।

२ प्रेषित इति । ते=त्वया प्रेषितः, प्रस्थापितः । 'वन'मिति शेषः । अप्रेषित इतिवाच्छेदः । त्वया प्रेष्यः—अनुमन्तुं योग्योऽपि युधिष्ठिरः, अप्रेषितोऽपि= त्वयाऽननुमन्यमानोऽपि नूनं राजा भविष्यत्येव । अतस्त्वया तेन सह सन्धिरेवोचितो वर्द्धिष्णुत्वान्नतु विरोध इत्यर्थ इत्यन्ये ।

राजाओं के जो चिह्न होते हैं वे सब उसके शरीर में विद्यमान हैं। अर्थात् युधिष्ठिर के साथ आपको जहाँ दयालुता का व्यवहार करना था परन्तु वहाँ उसके साथ आपने अन्याय किया और उसका राज्य छीनकर उसे वन में भेज दिया। तथापि वह युधिष्ठिर तो चक्रवर्ती राजा होगा यह निश्चित है। क्योंकि चक्रवर्ती के सभी चिह्न ( छत्र, चामर, पद्म, चक्र आदि ) युधिष्ठिर में विद्यमान हैं। अतः आपका किया कुछ भी न होगा और युधिष्ठिर ही निकट भविष्य में राज्य पर बैठेगा। अतः उत्तम हो यदि आप उससे मेल कर लें। अन्यथा आपको कष्ट और शोक के अतिरिक्त कुछ भी नहीं मिलेगा॥ १६॥

**विपरीततरश्च त्वं भागधेयेन संमतः।**
**अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः॥ १७॥**

[अन्वयः] धर्मात्मा धर्मकोविदः च त्वं भागधेये न संमतः [अतः] अर्चिषां प्रक्षयात् चैव—विपरीततरः।

[ विग्रहः ] अतिशयेन विपरीतः विपरीततरः। भाग एव भागधेयम्, तस्मिन् भागधेये। धर्मे एव आत्मा=शरीरं यस्यासौ धर्मात्मा। धर्मस्य धर्मे वा कोविदः—धर्मकोविदः।

[ अर्थः ] धर्मात्मा=धार्मिकप्रवरः। धर्मकोविदश्च=धर्मतत्त्वज्ञोऽपि। त्वं=भवान्। भागधेये=युधिष्ठिरदेयांशे। युधिष्ठिरभागे। न संमतः=नानुमतः। यतो युधिष्ठिरभागं दातुं नेच्छसि। [ अतः—अतो हेतोः। किञ्च ] अर्चिषां=नेत्ररश्मीनाम्। प्रक्षयाच्चैव=नाशाच्चैव। अन्धत्वाच्चैव। विपरीततरः=राज्यानर्हः। राजलक्षणैरहितः।

[ भाषाटीका ] परन्तु धर्मात्मा और धर्म के तत्त्व को जानने वाले भी आप युधिष्ठिर के भाग ( हिस्से ) को देना नहीं चाहते हैं, और नेत्रों से भी हीन

---

१ यद्वा—धर्मात्मा धर्मकोविदोऽपि त्वं [ यतो ] विपरीततरः—राजलक्षणशून्यः [ अतः ] किञ्च रश्मीनां प्रक्षयात्=अन्धत्वाच्च भागधेये—राज्यांऽशरूपे स्वभागे न संमतः=न योग्यः। अन्धत्वाद्राजलक्षणहीनत्वाच्च त्वं न राजसिंहासनोचित इत्यर्थो बोध्यः।

( अन्धे ) हैं अतः आपका भविष्य विपरीत दिखाई देता है । अर्थात् कुछ ही दिनों में आप इस राज्य से हाथ धोवेंगे । और युधिष्ठिर ही राज्य पावेगा । [अथवा आप धर्मात्मा होते हुए भी राजलक्षणों से शून्य हैं एवं नेत्रहीन हैं अतः आप इस राज्य के योग्य नहीं हैं ] ॥ १७ ॥

**आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।**
**गुरुत्वात्त्वयि सम्प्रेक्ष्य बहून् क्लेशांस्तितिक्षते ॥ १८ ॥**

[ अन्वयः ] युधिष्ठिरः—आनृशंस्यात् अनुक्रोशात् धर्मात् सत्यात् पराक्रमात् त्वयि गुरुत्वात् [ च ] संप्रेक्ष्याऽपि बहून् क्लेशान् तितिक्षते ॥

[ विग्रहः ] न नृशंसः-अनृशंसः, तस्य भावः आनृशंस्यं, तस्मात्—आनृशंस्यात् । गुरोर्भावो गुरुत्वं, तस्मात्-गुरुत्वात् ।

[ अर्थः ] युधिष्ठिरः—आनृशंस्यात्=अक्रूरत्वात् । मृदुस्वभावत्वात् । अनुक्रोशात्=दयालुत्वात् । धर्मात्=धर्मं वीक्ष्य । धार्मिकत्वादिति यावत् । सत्यात्=सत्यानुरोधात् । सत्यमाश्रित्येति वा । ल्यब्लोपे पञ्चमी । पराक्रमात्=पराक्रमशीलत्वात् । धैर्यादिति वा । पराक्रममास्थायेति वा । त्वयि=भवति । गुरुत्वात्=पूज्यबुद्ध्या च । सम्प्रेक्ष्य=विचार्य । बहून्=नानाविधान् बहून् । क्लेशान्=कष्टान् । तितिक्षते=सहते ।

[ भाषाटीका ] और वह युधिष्ठिर सरल व शान्त होने से, एवं दयालु धर्मात्मा सत्यप्रिय व पराक्रमी होने से तथा आप में गुरुभाव रखने के कारण जानबूझ कर भी नाना प्रकार के कष्ट सहन कर रहा है ॥ १८ ॥

**दुर्योधने सौबले च कर्णे दुःशासने तथा ।**
**एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ? ॥ १९ ॥**

[ अन्वयः ] दुर्योधने सौबले च कर्णे तथा दुःशासने—एतेषु ऐश्वर्यम् आधाय कथं त्वं भूतिम् इच्छसि ? ।

[ विग्रहः ] ईश्वरस्य भावः-ऐश्वर्यम् । तत् । दुःखेन शास्यते इति दुःशासनः, तस्मिन् दुःशासने ।

[ अर्थः ] दुर्योधने=सुयोधननाम्नि स्वात्मजे । सौबले च=

शकुनौ च। शकुनिनाम्नि स्वश्यालके च। कर्णे=अङ्गाधिपे सूत-पुत्रे कर्णे च। तथा=तथैव। दुःशासने=दुःशासननाम्नि दुर्वृत्ततमे स्वपुत्रे च। एतेषु=पूर्वोक्तेषु दुर्योधनादिषु खलेषु। ऐश्वर्यं=राज्यधुरम्। साम्राज्यसम्पदम्। आधाय=स्थापयित्वा। निक्षिप्य। कथं=कथङ्कारम्?। त्वं=धृतराष्ट्रः। भूतिं=सम्पदम्। समृद्धिम्। कल्याणञ्च। इच्छसि=अभिलषसि?। प्राप्तुमिच्छसि।

[ भावार्थः ] दुष्टेषु राज्यभारं निक्षिप्य तिष्ठंस्त्वं कथं शुभमिच्छसि?। नहि सति खलसंसर्गे शुभं लब्धुं शक्यम्।

[ कोशः ] 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः।

[ भाषाटीका ] दुर्योधन, शकुनि, कर्ण, दुःशासन आदि दुष्टों को राज्य का भार देकर तुम सुख और सम्पत्ति चाहते हो—यह तुम्हारी भूल है॥ १९॥

[ अथ पण्डितलक्षणानि ]

**आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।**
**यमर्थान्नाऽपकर्षन्ति स वै 'पण्डित' उच्यते॥ २०॥**

[ अन्वयः ] आत्मज्ञानं समारम्भः तितिक्षा धर्मनित्यता यम् अर्थात् न अपकर्षन्ति सः वै पण्डितः उच्यते॥

[ विग्रहः ] आत्मनो ज्ञानम् आत्मज्ञानम्। सम्यगारम्भः समारम्भः। धर्मे नित्यः=( दृढः )-धर्मनित्यः, धर्मनित्यस्य भावो धर्मनित्यता।

[ अर्थः ] आत्मज्ञानम्=आत्मतत्त्वावबोधः। तत्त्वज्ञानम्। समारम्भः=यज्ञादिशुभकर्मानुष्ठानम्। उद्योगः। पराक्रमो वा। तितिक्षा=क्षान्तिः। सहनशीलता। धर्मनित्यता=सुदृढा धार्मिकता। यं=यं पुरुषम्। अर्थात्=कर्त्तव्यात्कर्मणः। पुरुषार्थाच्च। पौरुषाच्च। नाऽपकर्षन्ति=नापसारयन्ति। न च्यावयितुं शक्नुवन्ति। स वै=स एव केवलः पुमान्। पण्डितः=पण्डितोऽयमिति। उच्यते=बुधैर्गीयते।

[ भावार्थः ] तत्त्वज्ञो यज्ञानुष्ठानाध्ययनादितत्परः क्षमाशीलः शान्तो धनोऽपि यः पुमानुद्योगमर्थकामौ च यथावन्निषेवते, न धर्मार्थौ जहाति एव 'पण्डित' इत्युच्यते।

[ भाषाटीका ] जो मनुष्य आत्मज्ञानी, देवपूजक, अनुष्ठानपरायण, शान्ति-प्रिय, और दृढ धार्मिक होते हुए भी अर्थ व काम का यथावत् सेवन करता है, अर्थात् कर्त्तव्य कार्यों की उपेक्षा नहीं करता है, व्यवसाय से पराङ्मुख नहीं होता, है वही सच्चा पण्डित है। अर्थात् धर्म और मोक्ष इन दो पुरुषार्थों के साथ २ अर्थ और काम इन दोनों पुरुषार्थों का भी समय २ पर सेवन करता है, उद्योग करने में आलस्य नहीं करता है वही सच्चा पण्डित है ॥ २० ॥

**निषेवते प्रशस्तानि, निन्दितानि न सेवते।**
**अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ २१ ॥**

[ अन्वयः ] [ यः— ] प्रशस्तानि निषेवते, निन्दितानि न सेवते, अनास्तिकः श्रद्दधानः [ च ] एतत् पण्डितलक्षणम्।

[अर्थः] [ यः-पुमान् ] प्रशस्तानि=श्रेष्ठानि। श्रेयःसाधनानि कर्माणि। निषेवते=भजते। अनुतिष्ठति। निन्दितानि=असत्कर्माणि। न सेवते=न भजते। परिवर्जयति। (किञ्च) अनास्तिकः=आस्तिकः। ईश्वरदेवगुरुद्विजनिन्दापराङ्मुखः। श्रद्दधानः=श्रद्धालुः। एतत्=इदम्। पण्डितलक्षणम्=पण्डितस्वरूपम्। 'जानीही'ति शेषः।

[ कोशः ] 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः।

[ भाषाटीका ] जो मनुष्य अच्छे कामों को करता है, बुरे कामों से दूर रहता है, ईश्वर देव गुरु परलोक में विश्वास रखता है, श्रद्धा भक्ति से युक्त है वही पण्डित है। (ये पण्डित के लक्षण हैं)। अर्थात् वही पण्डित है जो इन गुणों से युक्त है ॥ २१ ॥

**क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।**
**यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २२ ॥**

[ अन्वयः ] क्रोधः हर्षः च दर्पः च ह्रीः स्तम्भः मान्यमानिता यम् अर्थात् न अपकर्षन्ति स वै पण्डित उच्यते ॥

[ विग्रहः ] आत्मानं मान्यं मन्यते इति मान्यमानी, मान्यमानिनो भावो मान्यमानिता। पण्डा बुद्धिः सञ्जाताऽस्य पण्डितः।

[ अर्थः ] क्रोधः=कोपः। हर्षः=प्रमोदः। दर्पः=अभिमानः।

अहङ्कारः। ह्रीः=लज्जा। स्तम्भः=जाड्यम्। सङ्कोचः। मान्य-मानिता=श्रेष्ठमानिता। आत्मनि श्रेष्ठत्वबुद्धिः। यं=यं पुमांसम्। अर्थात्=पुरुषार्थात्। कर्त्तव्यकर्मणः। नापकर्षन्ति=न विमुखं कुर्वन्ति। नावसादयन्ति। स वै=स एव। पुरुष उच्यते=पुरुषोयमिति लोकैरुच्यते।

[ कोशः ] 'कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। 'दर्पोऽभिमानोऽहङ्कार' इत्यमरः।

[भाषाटीका] जिस पुरुष को क्रोध, हर्ष, घमण्ड, लज्जा, सङ्कोच, एवं बड़प्पन की भावना–अपने कर्त्तव्य कर्म से विमुख नहीं कर सकती है वही सच्चा पण्डित है॥

**यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।**
**कृतमेवास्य जानन्ति स वै पण्डित उच्यते॥ २३॥**

[ अन्वयः ] यस्य परे कृत्यं, मन्त्रितं मन्त्रं वा न जानन्ति [ तु ] अस्य कृतम् एव जानन्ति। सः वै पण्डितः उच्यते॥

[ अर्थः ] यस्य=यस्य पुरुषस्य। परे=शत्रवः। अन्ये वा लोकाः। कृत्यं=कर्त्तव्यं कर्म। ( किञ्च ) मन्त्रितं=विचारितम्। निर्णीतम्। मन्त्रं वा=विचारं वा। मन्त्रितं वा। सामदानाद्युपायं वा। न जानन्ति=नावगच्छन्ति। न तर्कयन्ति। [तु-किन्तु]। अस्य=पुंसः। कृतमेव=अनुष्ठितमेव कर्म। सम्पन्नं सफलमेव कर्म। जानन्ति=पश्यन्ति। स वै पण्डितः=स एव पण्डित इत्युच्यते। 'लोके बुधै'रिति शेषः।

[ भाषाटीका ] जिसके कर्त्तव्य कार्यों को या विचारों व गुप्त मन्त्रणाओं को शत्रु ( या अन्यलोग ) पहिले से नहीं जान पाते हैं, किन्तु कार्य हो जाने पर फल देख करके ही कर्त्तव्य कार्यों को समझ पाते हैं वही पण्डित है॥ २३॥

**यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।**
**समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते॥ २४॥**

[ अन्वयः ] यस्य कृत्यं—शीतम् उष्णं भयं रतिः समृद्धिः असमृद्धिः वा—न विघ्नन्ति स वै पण्डितः उच्यते॥

[ विग्रहः ] सम्यगृद्धिः समृद्धिः । न समृद्धिः असमृद्धिः ।

[ अर्थः ] यस्य=यस्य पुंसः । कृत्यं=करणीयं कर्म । शीतं=शैत्यम् । उष्णम्=ऊष्मा । भयं=साध्वसम् । रतिः=अनुरागः । विषयासक्तिर्वा । समृद्धिः=सम्पत्तिः । ऐश्वर्यम् । असमृद्धिर्वा=दारिद्र्यं वा । न विघ्नन्ति=न विनाशयन्ति । स वै=स एव । पण्डितः=पण्डित इति । उच्यते=लोके विद्वद्भिर्गीयते ।

[ कोशः ] 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । 'विभूतिर्भूतिरैश्वर्य'-मित्यमरः ।

[ भाषाटीका ] जिस मनुष्य के कर्त्तव्य कार्यों को जाड़ा, गर्मी, डर, अनुराग, सम्पत्ति या विपत्ति—कोई भी नहीं रोक सकते हैं वही सच्चा पण्डित है ॥२४॥

**यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।**
**कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २५ ॥**

[ अन्वयः ] यस्य संसारिणी प्रज्ञा धर्मार्थौ अनुवर्तते, यः च कामात् अर्थं वृणीते सः वै पण्डितः उच्यते ॥

[ विग्रहः ] संसरति तच्छीला संसारिणी । धर्मश्च अर्थश्च धर्मार्थौ ।

[ अर्थः ] यस्य=यस्य पुंसः । संसारिणी=तर्ककुशला । चञ्चला । विचारप्रवणा । ऊहापोहकुशला । विषयव्यापनशीला च । [स्वभावतोऽनवस्थितापीति यावत्]। प्रज्ञा=मतिः । धर्मार्थौ=धर्ममर्थञ्च । अनुवर्त्तते=अनुसरति । यो धर्मार्थौ परिपालयन् उद्योगं भजते, तर्कयति चेति यावत् । [ किञ्च- ] यश्च =यः पुमान् । कामात्=ऐहिकविषयोपभोगसुखात् । विषयसुखं परित्यज्येति यावत् । अर्थं=सर्वत्र सुखसाधनं धर्ममर्थञ्च । वृणीते=भजते । कामापेक्षया धर्ममर्थञ्च श्रेष्ठं मन्यते, तौ यथावत् परिपालयति च । स वै पण्डित उच्यते=स एव पण्डित इत्युच्यते । 'लोके'रिति शेषः ।

[ कोशः ] 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः ।

[ भाषाटीका ] जिस पुरुष की बुद्धि-जो स्वभाव से ही चञ्चल व सुख और आनन्द की ओर झुकनेवाली होती है—वह यदि धर्म और अर्थ का अनुसरण

करती है और जो केवल इस लोक में थोड़े से काल के लिए आनन्द देने वाले विषयोपभोग की उपेक्षा कर दोनों लोक में सुख देने वाले धर्म को और काम ( कर्त्तव्य कार्यों ) को उत्तम समझता है वही पण्डित है ॥ २५ ॥

**यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।**
**न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ २६ ॥**

[ अन्वयः ] पण्डितबुद्धयः नरा यथाशक्ति चिकीर्षन्ति, च यथाशक्ति कुर्वते, किञ्चित् [ कार्यम् ] न अवमन्यन्ते ॥

[ विग्रहः ] शक्तिमनतिक्रम्य यथाशक्ति । कर्त्तुमिच्छन्ति चिकीर्षन्ति । पण्डिता–सदसद्विवेकशीला–बुद्धिर्येषान्ते पण्डितबुद्धयः ।

[ अर्थः ] पण्डितबुद्धयः=सदसद्विवेकशालिबुद्धयः । कुशलमतयः । नराः=पुमांसः । यथाशक्ति=यथाबलम् । स्वशक्तिमनतिक्रम्य । चिकीर्षन्ति=कार्यं कर्त्तुमभिवाञ्छन्ति । च=किञ्च । यथाशक्ति=स्वशक्तिमवेक्ष्यैव । यथाबलमेव । कुर्वते=कार्याणि कुर्वन्ति च । [किञ्च] किञ्चित्=किमपि कार्यं, किमपि वस्तुजातं वा । नावमन्यन्ते=न तिरस्कुर्वन्ति । इदं पण्डितलक्षणमित्यर्थः ।

[भावार्थः] ये साधारणे सरलेऽपि च कार्ये हेयबुद्धिं न कुर्वन्ति, साधारणमपि जनं न तिरस्कुर्वन्ति, स्वशक्तिमवेक्ष्यैव च कार्यमारभन्ते ते एव पण्डिताः ।

[ भाषाटीका ] पण्डित लोग–अपनी शक्ति के अनुसार ही कार्य करने की इच्छा करते हैं, अपनी शक्ति के अनुसार ही कार्य करते भी हैं । और किसी (वस्तु) का भी तिरस्कार नहीं करते । अर्थात् सभी कार्य पूरी शक्ति लगाकर ही करते हैं ॥ २६ ॥

**क्षिप्रं विजानाति चिरं शृणोति**
**विज्ञाय चार्थं भजते न कामात् ।**
**नासम्पृष्टो ह्युपयुङ्क्ते परार्थे**
**तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २७ ॥**

( अन्वयः ) क्षिप्रं विजानाति, चिरं शृणोति, अर्थं विज्ञाय भजते, न कामात् । असंपृष्टः न परार्थे व्युपयुङ्क्ते । तत् पण्डितस्य प्रथमं प्रज्ञानम् ।

[ विग्रहः ] प्रज्ञायतेऽनेन प्रज्ञानम् ।

[ अर्थः ] क्षिप्रं=झटिति । द्रुतमेव । विजानाति=अवबुध्यते । 'कार्यादितत्त्व'मिति शेषः । चिरं=बहुकालपर्यन्तम् । शृणोति= आकर्णयति । ज्ञानदार्ढ्याय चिरं-मुहुर्मुहुः-शृणोतीत्यर्थः । अर्थं= कर्त्तव्यमर्थजातम् । विज्ञाय=यथावज्ज्ञात्वा । 'किं कर्त्तव्यं, कथं कर्त्तव्यं, कदा कर्त्तव्य'मित्यादि यथावन्निश्चित्येत्यर्थः । भजते= सेवते । प्रारभते । करोति च । न कामात्=कामवशीकृतस्वान्तोऽविचार्य कदाचिदपि कार्यं नैव भजते । असम्पृष्टः=यथावदपृष्टः । न्यायेनादरेण वाऽपृष्टः । परार्थे=अन्यार्थे । परकार्येषु । न व्युपयुङ्क्ते=न वाग्व्यापारं करोति । तत्=तदिदम् । पण्डितस्य=विदुषः । प्रथमं=प्रधानम् । प्रज्ञानं=चिह्नम् । 'अस्ती'ति शेषः ।

[ भाषाटीका ] जो मनुष्य किसी भी विषय को देखते ही व सुनते ही तुरन्त जान लेता है, किसी विषय को अच्छी तरह दृढ करने के लिए वारंवार सुनता व समझता है, खूब सोच समझकर ही किसी कार्य को करता है, और लोभ आदि के वशीभूत होकर सहसा कोई कार्य नहीं करता है, और विना पूछे किसी के काम में ( बीच में ) नहीं बोलता है—यह पण्डित का प्रधान लक्षण है ॥ २७ ॥

**नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।**
**आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २८ ॥**

( अन्वयः ) पण्डितबुद्धयः नराः—अप्राप्य न अभिवाञ्छति, नष्टं शोचितुं न इच्छन्ति, आपत्सु च न मुह्यन्ति ॥

[विग्रहः] न प्राप्यम्-अप्राप्यम् । पण्डिता बुद्धिर्येषान्ते पण्डितबुद्धयः ।

[ अर्थः ] पण्डितबुद्धयः=साराऽसारविवेकबुद्धयः । नराः= पुमांसः । अप्राप्यं=दुर्लभम् । नाभिवाञ्छन्ति=प्राप्तुं नेच्छन्ति । न च तथा व्यवस्यन्ति । ( किञ्च ) नष्टं=विनष्टं वस्तु । शोचितुं= चिन्तितुं । नेच्छन्ति=न वाञ्छन्ति । च=किञ्च । आपत्सु=विपत्सु । न मुह्यन्ति=न वैकल्यं भजन्ते ।

[ भाषाटीका ] कुशलबुद्धि पण्डित लोग दुर्लभ वस्तु की इच्छा नहीं करते,

जो वस्तु नष्ट हो गई उसकी चिन्ता भी नहीं करते। और बड़ी २ विपत्तियों में भी घबड़ाते नहीं हैं ॥ २८ ॥

**निश्चित्य यः प्रक्रमते, नान्तर्वसति कर्मणः।**
**अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २९ ॥**

[ अन्वयः ] यः निश्चित्य प्रक्रमते, किञ्च कर्मणः अन्तर्न वसति ( यश्च— ) अवन्ध्यकालः, वश्यात्मा, स वै पण्डितः उच्यते ॥

[ विग्रहः ] न वन्ध्यः—अवन्ध्यः' अवन्ध्यः कालो यस्यासौ–अवन्ध्यकालः। वशङ्गतो वश्यः। वश्यः आत्मा यस्यासौ वश्यात्मा।

[अर्थः] यः=यःपुमान्। निश्चित्य=नितरां विचार्य। सम्यग्विभाव्य। प्रक्रमते=कर्त्तव्यं कार्यं प्रारभते। किञ्च निश्चित्य प्रारब्धस्य कर्मणः=कार्यस्य। अन्तर्न वसति=मध्ये न विश्राम्यति। कार्यं समाप्यैव विश्राम्यति। कार्यं मध्य एव न त्यजतीति यावत्। अवन्ध्यकालः=निष्फलं कालक्षयमकुर्वाणः। अव्यर्थसमयः। सफलसमयः। वश्यात्मा=वशीकृतस्वान्तः। संयतेन्द्रियग्रामः। स वै=स एव। पण्डित उच्यते=पण्डित इत्युच्यते।

[ भाषाटीका ] जो मनुष्य पहले ही से खूब सोच विचारकर किसी कार्य को प्रारम्भ करता है, और प्रारम्भ किए हुए काम को पूरा किए विना बीच में ही उसे नहीं छोड़ता है, और अपने समय को व्यर्थ नहीं खोता है, कुछ न कुछ कार्य करता ही रहता है, और जिसने अपने इन्द्रियों और मन को वश में कर रखा है वही पण्डित है ॥ २९ ॥

**आर्यकर्माणि रज्यन्ते, भूतिकर्माणि कुर्वते।**
**हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ! ॥ ३० ॥**

( अन्वयः ) भरतर्षभ ! पण्डिताः आर्य्यकर्मणि रज्यन्ते, भूतिकर्माणि कुर्वते, हितं च न अभ्यसूयन्ति।

[ विग्रहः ] आर्याणां कर्म आर्यकर्म, तस्मिन् आर्यकर्मणि। भूत्यै कर्माणि भूतिकर्माणि, तानि भूतिकर्माणि। भरतः ऋषभ इव–भरतर्षभः, तत्सम्बुद्धौ हे भरतर्षभ।

[ अर्थः ] भरतर्षभ=हे भरतवंशश्रेष्ठ धृतराष्ट्र ! । पण्डिताः=विद्वांसः । आर्यकर्मणि=शिष्टसंमते कर्मणि । रज्यन्ते=अनुरज्यन्ति । शिष्टमार्गानुसारिणो भवन्तीत्यर्थः । [ किञ्च ] भूतिकर्माणि=शुभोदयानि कर्माणि। शुभोदर्काणि कार्याणीति यावत्। कुर्वते=आचरन्ति । सेवन्ते । हितञ्च=हितवाक्यञ्च । हितोपदेष्टारञ्च । नाभ्यसूयन्ति=न तिरस्कुर्वन्ति । नावमन्यते । हितोपदेशमाद्रियन्ते इति यावत् ।

[ भाषाटीका ] हे धृतराष्ट्र ! पण्डित लोग शिष्टों के द्वारा अनुमोदित मार्ग पर चलते हैं । जिन कार्यों के करने से अभ्युदय तथा धर्म अर्थ आदि कार्यों की वृद्धि होती हो उन्हीं कार्यों को करते हैं । हित वाक्यों को आदर से सुनते हैं, हितोपदेष्टा का (तिरस्कार न कर उनका) सत्कार करते हैं ॥ ३० ॥

**न हृष्यत्यात्मसंमाने नाऽवमानेन तप्यते ।**
**गाङ्गो ह्रद इवाऽक्षोभ्यो यः सः पण्डित उच्यते ॥३१॥**

[अन्वयः] य आत्मसम्माने न हृष्यति, अवमानेन न तप्यते, गाङ्गः ह्रदः इव अक्षोभ्यः [च भवति] सः पण्डितः उच्यते ॥ ३१ ॥

[ विग्रहः ] आत्मनः संमानम्-आत्मसंमानम् । तस्मिन् आत्मसंमाने । गङ्गाया अयं गाङ्गः । न क्षोभ्यः अक्षोभ्यः ।

[अर्थः] यः-आत्मसंमाने=स्वसत्कारे । न=नैव । हृष्यति=प्रसीदति । न प्रसन्नो भवति । अपमानेन=आत्मनस्तिरस्कारेण च । न तप्यते=न खिद्यते । न दुःखितो भवति । [किन्तु] गाङ्गः =गङ्गासम्बन्धी । ह्रद इव=अगाधो जलाधार इव । अक्षोभ्यः=अप्रधृष्यः । [ भवति=वर्त्तते ] स पण्डितः=विद्वान् । उच्यते=कथ्यते ।

[ कोशः ] 'तत्राऽगाधजलो ह्रदः' इत्यमरः ।

[ भाषाटीका ] जो मनुष्य अपने संमान से प्रसन्न नहीं होता, और अपने अपमान से दुःखी नहीं होता, किन्तु गङ्गा जी की झील ( या रुकी हुई धारा ) की तरह ( या नदी के उद्गमस्थान झील की तरह ) अगाध और गम्भीर तथा अक्षुब्ध रहता है अर्थात् विपत्तियों में घबड़ाता नहीं—वही पण्डित है ॥ ३१ ॥

**तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।**
**उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ३२ ॥**

[ अन्वयः ] [यः-] सर्वभूतानां तत्त्वज्ञः, सर्वकर्मणां योगज्ञः, मनुष्याणाम् उपायज्ञः [भवति सः] नरः पण्डितः उच्यते ।

[ विग्रहः ] तत्त्वं जानातीति तत्त्वज्ञः । सर्वाणि च तानि भूतानि च सर्वभूतानि, तेषाम् सर्वभूतानाम् । योगं जानातीति योगज्ञः । सर्वाणि च तानि कर्माणि सर्वकर्माणि, तेषां सर्वकर्मणाम् । उपायं जानातीति उपायज्ञः ।

[ अर्थः ] (यः-) सर्वभूतानां=सकलप्राणिनाम् । प्राणिमात्रस्य । तत्त्वज्ञः=स्वभावज्ञः । सकलप्राणिमात्रनिष्ठाऽनित्यत्वादिधर्मज्ञो वा । सर्वकर्मणां=सर्वकार्याणाम् । योगज्ञः=अनुष्ठानवित् । उपायज्ञो वा । सर्वकार्यकुशल इत्यर्थः । किञ्च मनुष्याणां=मानुषाणाम् । उपायज्ञः=आराधनोपायपटुः । परचित्तप्रसाधनोपायाभिज्ञ इत्यर्थः । पुरुषार्थसमर्थो वा । [सः-] नरः=पुमान् । पण्डित उच्यते=पण्डित इत्युच्यते ।

[कोशः] 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः ।

[ भाषाटीका ] जो मनुष्य सब प्राणियों के स्वभाव को जानता है, सब कामों के करने की व युक्तियों को जानता है एवं मनुष्यों के प्रसन्न करने की कला में भी प्रवीण है एवं पुरुषार्थी है—वही पण्डित है ॥ ३२ ॥

**प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।**
**आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ ३३ ॥**

[ अन्वयः ] यः प्रवृत्तवाक्, चित्रकथः, ऊहवान्, प्रतिभानवान्, च आशु ग्रन्थस्य वक्ता—स पण्डितः (इति) उच्यते ।

[विग्रहः] प्रवृत्ता वाक् यस्यासौ प्रवृत्तवाक् । चित्रा कथा यस्यासौ चित्रकथः। प्रशस्त ऊहोऽस्यास्तीति ऊहवान् । प्रतिभानमस्यास्तीति प्रतिभानवान् ।

[ अर्थः ] यः-प्रवृत्तवाक्=धाराप्रवाहप्रवचनप्रवीणः । अकुण्ठितधिषणः । चित्रकथः=चित्रविचित्रनानाख्यानकुशलः । ऊहवान्=ऊहापोहपटुः । तर्कनिपुणः । प्रतिभानवान्=प्रत्युत्पन्न-

मतिः । च=किञ्च । आशु=त्वरितम् । ग्रन्थस्य=प्रबन्धस्य । वक्ता=व्याख्याता च । स पण्डित उच्यते ।

[ भाषाटीका ] जो मनुष्य हाजिर जवाब हो या धारा प्रवाह से भाषण देना जानता हो, चित्र विचित्र उपाख्यान ( कथा कहानी ) जानता हो, समझदार हो, प्रत्युत्पन्नमति हो, ग्रन्थों की कठिन पंक्तियों को तुरन्त लगा सकता हो वह पण्डित कहलाता है ॥ २३ ॥

**श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।**
**असम्भिन्नार्यमर्यादः पण्डिताख्यां लभते सः ॥ २४ ॥**

[ अन्वयः ] यस्य श्रुतं प्रज्ञानुगं, प्रज्ञा चैव श्रुतानुगा, असंभिन्नार्य-मर्यादः, सः पण्डिताख्यां लभेत ॥

[ विग्रहः ] प्रज्ञामनुगच्छतीति प्रज्ञानुगम् । श्रुतमनुगच्छति श्रुतानुगा । आर्याणां मर्यादा आर्यमर्यादा । न सम्भिन्ना असम्भिन्ना, असम्भिन्ना आर्य-मर्यादा येनासौ--असम्भिन्नार्यमर्यादः । पण्डित इत्याख्या पण्डिताख्या,ताम् ।

[ अर्थः ] यस्य-पुंसः । श्रुतं=शास्त्रम् । प्रज्ञानुगं=बुद्ध्युप-बृंहितम् । बुद्धिविराजितम् । भवतीति शेषः । प्रज्ञा चैव=बुद्धि-श्चैव । श्रुतानुगा=शास्त्रानुसारिणी । श्रुतिंभूषिता भवति । [यश्च] प्राचीनशिष्टाचारपद्धतिः । स पण्डिताख्यां=पण्डितनामधेयम् । लभेत=प्राप्नुयात् ।

[कोशः] 'आख्याऽऽह्वे अभिधानं च नामधेयञ्च नाम च' इत्यमरः ।

[भाषाटीका] जिस मनुष्य का शास्त्र (शास्त्रीय ज्ञान) बुद्धि के द्वारा खूब बढा चढा है । अर्थात् तर्क शक्ति के द्वारा शास्त्रीय ज्ञान पूर्ण प्रौढ एवं उन्नत होगया है । और जिसकी बुद्धि--तर्कशक्ति--भी शास्त्रानुगामिनी है,जो प्राचीन शिष्टाचारों व प्राचीन रूढियों का आदरपूर्वक श्रद्धा से परिपालन करता है वही पण्डित है ॥२४॥

(अथ मूर्खलक्षणानि)

**अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।**
**अर्थांश्चाऽकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ २५ ॥**

[ अन्वयः ] अश्रुतः च समुन्नद्धः दरिद्रश्च महामनाः, अकर्मणा च अर्थान् प्रेप्सुः बुधैः 'मूढः' इति उच्यते ॥

[ विग्रहः ] नास्ति श्रुतं यस्यासौ-अश्रुतः। महत् मनो यस्यासौ महामनाः। न कर्म अकर्म, तेन-अकर्मणा। नास्ति कर्म यस्मिन् तेनेति वा।

**[ अर्थः ] अश्रुतश्च=अनधीतशास्त्रश्च। अनधिगतविद्यश्च। मूर्खोऽपि। समुन्नद्धः=गर्वितः। दृप्तः। दरिद्रश्च=निर्धनः, निःस्वश्च सन्नपि। महामनाः=उदाराशयः। दानादिशौण्डः। अकर्मणा=अनायासेन। अनुद्योगेन। निन्द्यकर्मणा वा। अर्थान्=सम्पदः। मनोरथान्। प्रेप्सुः=प्राप्तुमिच्छुः। लिप्सुः। बुधैः=पण्डितैः। मूढ इत्युच्यते=मूर्खोऽयमिति भण्यते।**

[ कोशः ] 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः।

[ भाषाटीका ] जो मनुष्य विद्यारहित होकर भी गर्व ( घमण्ड ) करता है, दरिद्र होकर भी उदार ( खर्चीले ) स्वभाव का होता है-और विना परिश्रम या निन्दित मार्ग से धन सम्पत्ति पैदा करना चाहता है-इन तीनों को पण्डित लोग मूर्ख कहते हैं ॥ २५ ॥

**स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति।**
**मिथ्याऽऽचरति मित्रार्थे यश्च मूढः स उच्यते ॥ २६ ॥**

[ अन्वयः ] यः स्वम् अर्थम् परित्यज्य परार्थम् अनुतिष्ठति, यश्च मित्रार्थे मिथ्या आचरति सः मूढ उच्यते ॥

[ विग्रहः ] परस्यार्थः परार्थस्तम्। मित्रस्य अर्थः मित्रार्थः, तस्मिन्।

**[अर्थः] यः-पुमान्-स्वं=स्वकीयम्। आत्मनः। अर्थं=कार्यं। प्रयोजनम्। परित्यज्य=विहाय। त्यक्त्वा। विनाश्य च। परार्थं=वृथैव परकार्याणि। अनुतिष्ठति-करोति। साधयति, भजते च। यश्च पुमान्। मित्रार्थे=मित्रकार्ये। मिथ्याऽऽचरति=कपटं करोति। स मूढ उच्यते=बुधैः स पुमान् मूढोऽयमिति कथ्यते।**

[ भाषाटीका ] जो मनुष्य अपने कामों को छोड कर व्यर्थ दूसरों के कार्यों को करता है। ( जबरदस्ती दूसरों के पचडों में पडता है ) और जो मनुष्य मित्र के कार्य में गडबड या कपट करता है, ये दोनों मूर्ख हैं ॥ २६ ॥

**अकामान्कामयति यः काम्यमानान्परित्यजेत् ।**
**बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३७ ॥**

[ अन्वयः ] यः अकामान् कामयति काम्यमानान् ( च ) परित्यजेत् , च यः बलवन्तं द्वेष्टि, तं मूढचेतसम् आहुः ॥

[ विग्रहः ] न कामाः अकामाः, नास्ति कामः-अनुरागो-येषान्ते अकामा इति वा, तान् । काम्यन्ते इति काम्यमानाः, तान् । [ कामयन्ते इति कामयमानाः, तान् कामयमानान् । छान्दसेऽकारलोपे काम्यमानानिति वा ]। प्रशस्तं बलमस्यास्तीति बलवान् , तम् बलवन्तम् । मूढं चेतो यस्यासौ मूढचेताः, तं मूढचेतसम् ।

[ अर्थः ] यः पुमान् । अकामान्=अनुचितानर्थान् । निरर्थकं वस्तु वा । निरनुरागान् जनानिति वा । कामयति=वाञ्छति । काम्यमानान्=सर्वलोकाभिलषणीयानर्थान्। अनुरक्ताँल्लोकानिति वा। परित्यजेत्=उत्सृजेत् । अवमन्येत । च=किञ्च। बलवन्तं=बलशालिनं पुमांसम् । द्वेष्टि=अभ्यसूयति । विरुणद्धि। तं=पुरुषम् । मूढचेतसम्=अविवेकिनम् । विक्षिप्तचेतसम् । मूर्खम् । आहुः=बुधाः प्राहुः ।

[ भाषाटीका ] जो मनुष्य अयोग्य व निरर्थक वस्तु को चाहता है; या अप्रिय लोगों से प्रेम करना चाहता है । और जो सर्वप्रिय वस्तु को छोड़ देता है, या प्रेम करने वालों से भी-विरोध करता है । और जो अपने से अधिक बलशाली समर्थ आदमी से विरोध व द्वेष करता है, ये तीनों मूर्ख हैं ॥ ३७ ॥

**अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।**
**कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३८ ॥**

[ अन्वयः ] यः अमित्रं मित्रं कुरुते, मित्रं द्वेष्टि, हिनस्ति च, दुष्टं कर्म च आरभते, तं मूढचेतसम् आहुः ।

[ विग्रहः ] न मित्रम् अमित्रः, तम् अमित्रम् ।

[ अर्थः ] यः-अमित्रं=रिपुम् । मित्रं=सखायम् । कुरुते= विधत्ते । मित्रं=सुहृदञ्च । द्वेष्टि=विद्वेष्टि । अभ्यसूयति । हिनस्ति च=मित्रं हन्ति च । पीडयतीति वा । दुष्टं=निन्दितम् ।

कर्म=कार्यम् । आरभते=प्रारभते । विधत्ते । तं=तादृशं पुरुषम् । मूढचेतसं=विवेकविकलं । मूर्खम् । आहुः=विद्वांसो विदितवेद्या आहुः ।

[ भाषाटीका ] जो मनुष्य शत्रुओं से मित्रता करता है, मित्रों से वैर करता है, और उन्हें कष्ट पहुँचाता है व मारता है, एवं दुष्ट कर्मों को करता है—उसे पण्डित गण मूर्ख कहते हैं ॥ ३८ ॥

**संसारयति कृत्यानि सर्वत्र विचिकित्सते ।**
**चिरं करोति क्षिप्रार्थे, स मूढो भरतर्षभ ! ॥ ३९ ॥**

( अन्वयः ) भरतर्षभ ! ( यः ) कृत्यानि संसारयति (परन्तु) सर्वत्र विचिकित्सते । क्षिप्रार्थे चिरं करोति, सः मूढः ( इत्युच्यते ) ।

( अर्थः ) भरतर्षभ=हे भरतपुङ्गव । हे कुरुकुलशिरोमणे ! ( यः पुमान् ) कृत्यानि=नानाविधानि कर्माणि । संसारयति=विस्तारयति । मन्त्रिभृत्यादिद्वारा इतस्ततः कार्यं प्रवर्त्तयति । [ परन्तु=किन्तु ] सर्वत्र=सर्वेषु कार्येषु, सर्वेषु भृत्येषु च । विचिकित्सते=संशयं कुरुते । तेषु न विश्वसिति । [ किञ्च ] क्षिप्रार्थे=शीघ्रकरणीयेऽपि कार्ये । चिरं=विलम्बम् । करोति=विधत्ते । सः=स पुमान् । मूढः=मूर्खः । उच्यते इति, विज्ञेय इति वा शेषः ।

[ भाषाटीका ] हे भरतर्षभ ! जो मनुष्य नाना प्रकार के कार्यों को चारों तरफ फैलाता है, पर किसी पर भी विश्वास नहीं करता है, (सभी नौकर भृत्य आदि पर सन्देह करता है) वह मूर्ख है । और जो मनुष्य जल्दी करने योग्य कार्य में विलम्ब करता है वह भी मूर्ख है ॥ ३९ ॥

**श्राद्धं पितृभ्यो न ददाति, दैवतानि न चाऽर्चति ।**
**सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ४० ॥**

( अन्वयः ) ( यः ) पितृभ्यः श्राद्धं न ददाति, दैवतानि च न अर्चति, सुहृत् मित्रं न लभते तं मूढचेतसम् आहुः ।

[ विग्रहः ] श्रद्धया दीयते तच्छ्राद्धम् । देवता एव दैवतानि । मूढं चेतो यस्यासौ मूढचेताः, तम् मूढचेतसम् ।

[अर्थः] [यः पुमान्-] पितृभ्यः=स्वर्गतेभ्यो बन्धुबान्धवेभ्यः। पूर्वजेभ्यः। श्राद्धं=श्रद्धया दीयमानं कव्यम्। न ददाति=समये नार्पयति। क्षयाहे महालयादौ च श्राद्धकर्म न करोतीत्यर्थः। दैवतानि च=देवांश्च। नार्चति=प्रत्यहं न पूजयति। सुहृत्=सहृदयम्। मित्रं=सखायम्। न लभते=न प्राप्नोति। नोपाश्रयते। न स्वीकरोति। तं=तादृशं पुमांसम्। मूढचेतसम्=मूढहृदयम्। आहुः=प्राज्ञाः कथयन्ति।

[ भाषाटीका ] जो मनुष्य शास्त्रोक्त समय पर पितरों का श्राद्ध नहीं करता है, देवताओं की पूजा नहीं करता है, सच्चे व सहृदय मित्र को प्राप्त नहीं करता है-वह मूर्ख है ॥ ४० ॥

**अनाहूतः प्रविशति, अपृष्टो बहु भाषते।**
**अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४१ ॥**

[ अन्वयः ] मूढचेताः नराधमः अनाहूतः प्रविशति—अपृष्टः बहु भाषते, अविश्वस्ते विश्वसिति।

[ विग्रहः ] न आहूतः अनाहूतः। न पृष्टः-अपृष्टः। न विश्वस्तः-अविश्वस्तः, तस्मिन् अविश्वस्ते। नरेषु अधमः-नराधमः।

[ अर्थः ] मूढचेताः=मूर्खः। अतएव-नराधमः=पुरुषाधमः। नीचः पुरुषः। अनाहूतः=अनाकारितः सन्। प्रविशति=परगृहं प्रविशति। अपृष्टः=अननुयुक्तश्च सन्। बहु=निरर्थकं भूरि। भाषते=ब्रूते। किञ्च--अविश्वस्ते=अज्ञातकुलशीले। विश्वासानर्हे। विश्वसिति=विश्वासं करोति। एतन्मूढलक्षणमित्यर्थः।

[ भाषाटीका ] जो मनुष्य विना बुलाये किसी के घर जाता है, विना पूछे व्यर्थ ही ज्यादा बोलता है, अविश्वासी ( अपरीक्षित ) का विश्वास करता है, वह मूर्ख और नीच है ॥ ४१ ॥

**परं क्षिपति दोषेण वर्तमानः स्वयं तथा।**
**यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ४२ ॥**

[ अन्वयः ] यः स्वयं तथा वर्तमानः ( अपि ) परं दोषेण क्षिपति

( यः— ) च अनीशानः क्रुध्यति, स च नरः मूढतमः ॥

[ विग्रहः ] वर्त्तते इति वर्त्तमानः । ईष्टे इतीशानः, न ईशानः अनीशानः । अतिशयेन मूढो मूढतमः ।

[अर्थः] यः=स्वयम्=आत्मना । तथा वर्त्तमानः=तथैव प्रवर्त्तमानः । मद्यपानादिकं कुर्वाणः । तमेव दोषं कुर्वन् । परम्=अन्यम् । दोषेण=तेन दूषणेन । मद्यपानादिना दुर्गुणेन । क्षिपति=अधिक्षिपति । 'त्वं मद्यपो नीच' इत्यादिवाक्यैरधिक्षिपति । यश्च=यश्च पुमान् । अनीशानः=अनीश्वरः सन् । अशक्तः सन् । असमर्थः सन् । क्रुध्यति=क्रोधं करोति । स च=सोऽपि । नरः=पुमान् ( अपिशब्दात्पूर्वोक्तः ) मूढतमः=महामूर्खः । 'विज्ञेय' इति शेषः ।

[ भाषाटीका ] जो मनुष्य स्वयं उसी अपराध को करता हुआ भी उस अपराध के लिए दूसरे की निन्दा करता है, [ जैसे स्वयं चोरी करता हुआ भी चोरी के लिए—दूसरे की निन्दा करता है ] वह, तथा शक्ति नहीं होते हुए भी जो क्रोध करता है वह मनुष्य-महामूर्ख है ॥ ४२ ॥

**आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम्[1] ।**
**अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४३ ॥**

[ अन्वयः ] इह-धर्मार्थपरिवर्जितम् आत्मनः बलम् अज्ञाय नैष्कर्म्यात् अलभ्यम् इच्छन् मूढबुद्धिः उच्यते ॥

[ विग्रहः ] धर्मश्च अर्थश्च धर्मार्थौ, धर्मार्थाभ्यां परिवर्जितम् धर्मार्थपरिवर्जितं, तत् । न लभ्यम्-अलभ्यम् । तत् । कर्मणो निष्क्रान्तो निष्कर्मा । निष्कर्मणो भावो नैष्कर्म्यम् । तस्मात् नैष्कर्म्यात् ।

[अर्थः] इह=अस्मिञ्जगति । धर्मार्थपरिवर्जितं=धर्मार्थशून्यम् । आत्मनः=स्वस्य । बलम्=सामर्थ्यं । शक्तिम् । अज्ञाय=अज्ञात्वा । छान्दसो ल्यप् । नैष्कर्म्यात्=अनायासेन । अयत्नेनैव । अलभ्यम्=दुर्लभं वस्तु । इच्छन्=अभिलष्यन् नरः । मूढबुद्धिः=जडमतिः । उच्यते=कथ्यते ।

---

१ 'धर्मार्थपरिबृंहित'मिति परे पठन्ति । धर्मार्थपरिपुष्टमिति च तदर्थः । धर्मार्थपरिवर्जितमिति-अलभ्यमित्यस्य विशेषणमित्यन्ये । क्रियाविशेषणं वा ।

[ भाषाटीका ] जो मनुष्य धर्म और धन की कमी के कारण उत्पन्न हुई अपनी निर्बलता को नहीं जानता है और अलभ्य वस्तु को अनायास ही प्राप्त करना चाहता है, वह मूर्ख है। ( अर्थात् जो आदमी अपने में धर्म और धन की त्रुटि को नहीं जानता है और बिना प्रयत्न ही दुर्लभ वस्तु को प्राप्त करना चाहता है वह भी मूर्ख है ) ॥ ४३ ॥

**अशिष्यं शास्ति यो राजन्! यश्च शून्यमुपासते।**
**कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४४ ॥**

[ अन्वयः ] राजन्! यः अशिष्यं शास्ति, यः च शून्यम् उपासते, यः च कदर्यं भजते, तं मूढचेतसम् आहुः।

[ विग्रहः ] शासितुं योग्यः शिष्यः, न शिष्यः अशिष्यः, तम्—अशिष्यम्। मूढं चेतो यस्यासौ मूढचेताः, तम् मूढचेतसम्।

[ अर्थः ] राजन्=हे नृपते!। हे धृतराष्ट्र! यः=यः पुमान्। अशिष्यम्=अशासनीयं। दुष्टम्। अयोग्यं च शूद्रादिकम्। अनधिकारिणम्। शास्ति=उपदिशति। शिक्षयति। यश्च=यो वै। शून्यम्=शून्यहृदयं, क्रूरम्। यद्वा शून्यं=निरर्थकं कर्म। [ शून्यंगुप्तं यथा स्यात्तथा राजपत्नीपरदारादिकं भजते इत्यर्थं इति तु नीलकण्ठः ]। उपासते=उपास्ते। सेवते। करोति। किञ्च-यश्च=यो वै पुमान्। कदर्यं=कृपणम्। बद्धमुष्टिम्। अदातारम्। भजते=सेवते। तं=तादृशं नरम्। मूढचेतसम्=जडमतिम्। मूर्खम्। आहुः=वदन्ति। 'पण्डिता' इति शेषः।

[ कोशः ] 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इत्यमरः।

[ भाषाटीका ] जो मनुष्य अयोग्य मनुष्य को उपदेश देता है, और जो क्रूर हृदय निर्दयं चित्त की सेवा करता है। या गुप्तरूप से (परस्त्रीगमन, चोरी आदि) पाप करता है, या निरर्थक काम करता है, और जो कृपण ( सूम) की (धन की इच्छा से ) सेवा करता है उसे पण्डित लोग जडबुद्धि (मूर्ख) कहते हैं ॥ ४४ ॥

**अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा।**
**विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ४५ ॥**

[ अन्वयः ] यः महान्तं अर्थम् आसाद्य विद्याम् ऐश्वर्यम् एव वा ( आसाद्य ) असमुन्नद्धः विचरति सः पण्डितः उच्यते ॥

[ विग्रहः ] ईश्वरस्य भावः ऐश्वर्यम् । तत् । न समुन्नद्धः-असमुन्नद्धः ।

[ अर्थः ] यः=यः पुमान् । महान्तं=विपुलम् । अर्थं=धनम् । आसाद्य=लब्ध्वाऽपि । किञ्च-विद्यां=ज्ञानम् । ऐश्वर्यमेव वा=प्रभुत्वमेव वा । अधिकारमेव वा । आसाद्येति शेषः । असमुन्नद्धः=अनुद्धतः । अगर्वितः सन् । विचरति=प्रचरति । लोके व्यवहरति । तिष्ठति । सः=स नरः । पण्डित उच्यते=विद्वानित्युच्यते ।

[ कोशः ] 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ।

[ भाषाटीका ] जो मनुष्य बहुत अधिक धन पाकर या अधिक विद्या व ऊँचा अधिकार ( ओहदा ) पाकर भी घमण्ड नहीं करता है, किन्तु सरल भाव से ही रहता है—वही पण्डित कहलाता है ॥ ४५ ॥

**एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।**
**योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४६ ॥**

[ अन्वयः ] यः भृत्येभ्यः असंविभज्य एकः सम्पन्नम् अश्नाति च शोभनं वासः वस्ते, ततः कः नृशंसतरः ? ॥

[विग्रहः] न संविभज्य-असंविभज्य । अतिशयितो नृशंसः-नृशंसतरः ।

[ अर्थः ] यः=यः पुमान् । भृत्येभ्यः=सेवकेभ्यः । अनुजीविभ्यः । बन्धुबान्धवेभ्यश्च । असंविभज्य=सम्यग्विभागेनाऽप्रदाय । एकः=एकाकी एव । सम्पन्नं=बहुव्यञ्जनान्वितं सुमधुरं भोज्य-भक्ष्य-लेह्य-पेयादिकम् । अश्नाति=भुङ्क्ते । अभ्यवहरति । च=किञ्च । शोभनं=बहुमूल्यम् । महाधनम् । विचित्रं सुन्दरञ्च । वासः=वस्त्रम् । वसनाभरणादिकम् । वस्ते=धारयति । परिधत्ते । ततः=तस्मात्पुंसः । कः=को वै जगति । नृशंसतरः=क्रूरतरः । अस्तीति शेषः । कोऽपि नास्तीति भावः ।

[ भाषाटीका ] जो मनुष्य अपने नौकर चाकर भाई बन्धुओं को विना दिए अकेले ही बढ़िया २ भोजन करता है, और बढ़िया २ कपड़े आदि पहिनता है

उससे बढ़कर नीच निर्दयी व खल जगत् में कौन होगा ? । अर्थात् वही सबसे बड़ा नीच है ।

**एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।**
**भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ४७ ॥**

[ अन्वयः ] एकः पापानि कुरुते, महाजनः फलं भुङ्क्ते । [परन्तु कियताऽपि कालेन ] भोक्तारः [ तु ] विप्रमुच्यन्ते, कर्ता [ एव ] दोषेण लिप्यते ॥

[ विग्रहः ] महांश्चासौ जनश्च महाजनः । करोतीति कर्ता ।

[ अर्थः ] एकः=एकाकी नरः । पापानि=दुष्कृतानि । कुरुते=आचरति । विधत्ते । परन्तु तस्य पापस्य महाजनः=जनसमुदायः । जनता । फलं=दुष्कृतफलम् । भुङ्क्ते=अनुभवति । [ किन्तु कियताऽपि कालेन ] भोक्तारः=पापफलभोक्तारो जनास्तु । विप्रमुच्यन्ते=विमुक्ता भवन्ति । कर्ता=पापी तु । पापाचार एव । दोषेण=पापेन । लिप्यते=युज्यते ।

[भाषाटीका] दुष्ट व्यक्ति अकेला पाप करता है, पर उसका फल सब समाजको भोगना पड़ता है। जैसे—एक चोर के कारण गाँव के दस व्यक्ति पकड़े जाते हैं, इस प्रकार एक के लिये सभी गाँव वाले कष्ट उठाते हैं। परन्तु इस तरह कष्ट पाकर वे सब तो छूट जाते हैं, परन्तु जो असल पापी हैं उसके शिर पर वह पाप रही जाता है । और उसे नरक में ले जाता है ॥ ४७ ॥

**एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।**
**बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४८ ॥**

[ अन्वयः ] धनुष्मता मुक्तः इषुः एकं हन्यात्, न वा हन्यात् । बुद्धिमता उत्सृष्टा बुद्धिः [ तु ] सराजकं राष्ट्रं हन्यात् ॥

[ विग्रहः ] धनुरस्त्यस्य धनुष्मान्, तेन धनुष्मता । प्रशस्ता बुद्धिरस्त्यस्य बुद्धिमान्, तेन बुद्धिमता । राजकेन सहितं सराजकम् । तत् ।

[ अर्थः ] धनुष्मता=धानुष्केण । धनुर्धरेण । मुक्तः=विनिर्मुक्तः । इषुः=बाणः । एकं=लक्ष्यम्, एकाकिनं पुरुषम् । हन्यात्=विनाशयेत् । न वा हन्यात्=लक्ष्याच्च्युतत्वात्स बाणो लक्ष्यभूतं

पुरुषादिकं नैव वा हन्तुं शक्नुयात् । बुद्धिमता=धीमता नीति-कुशलेन विदुषा । उत्सृष्टा=प्रयुक्ता । बुद्धिः=बुद्धिस्तु । नीतिस्तु । मन्त्रस्तु । सराजकं=नृपतिचक्रसहितम् । राष्ट्रं=सकलं राज्यमेव । हन्यात्=विनाशयेत् । हन्तुं शक्नुयात् ।

[ कोशः ] 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । 'बुद्धिर्मनीषा धिषणा' इत्यमरः ।

[ भाषाटीका ] धनुष चलाने वाले योद्धा के हाथ से छूटा हुआ बाण एक को ही मार सकता है, और यदि निशाना चूक जाए तो एक को भी नहीं मार सकता है । परन्तु बुद्धिमान् व्यक्ति अपनी बुद्धि [ कूटनीति ] के जोर से राजा को व उसके समस्त राज्य को भी नष्ट कर सकता है ॥ ४८ ॥

**एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।**
**पञ्च जित्वा, विदित्वा षट्, सप्त हित्वा सुखी भव ॥४९॥**

[ अन्वयः ] एकया द्वे विनिश्चित्य चतुर्भिः त्रीन् च वशे कुरु, पञ्च जित्वा, षट् विदित्वा, सप्त हित्वा—सुखी भव ॥

[ अर्थः ] एकया=बुद्ध्या । द्वे=कार्याऽकार्ये । विनिश्चित्य=सम्यगवधार्य । निर्णीय । चतुर्भिः=सामदानदण्डभेदैरुपायैः । त्रींश्च=मित्रोदासीनशत्रूंश्च । वशे कुरु=स्वायत्तीकुरु । पञ्च=चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि पञ्चज्ञानेन्द्रियाणि । जित्वा=विजित्य । स्ववशानि कृत्वा । षट्=सन्धि-विग्रह-याना-ऽऽसन-द्वैधीभाव-समाश्रयाख्यान् षड्गुणान् । विदित्वा=सम्यगवधार्य । सप्त=कामिनी-द्यूत मृगया-मद्यपान-वाक्पारुष्य-दण्ड-पारुष्य-वृथाद्रव्यव्ययाख्यानि सप्त राजदूषणानि । हित्वा=त्यक्त्वा । सुखी भव=स्थिरं राज्यलक्ष्मीसुखमनुभव । अयं च राजनीतिपक्षेऽर्थः ।

१ तदुक्तं—

"स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥" इति ।

अध्यात्मपक्षे तु-एकया—बुद्ध्या, व्यवसायात्मिकया, द्वे—नित्याऽनित्ये ब्रह्म, प्रपञ्चजालं च विनिश्चित्य, चतुर्भिः=शमदमोपरमश्रद्धाभिः, त्रीन्-कामक्रोधलोभान्, वशे कुरु। पञ्च-ज्ञानेन्द्रियाणि जित्वा, षट्-क्षुत्तृट्शोकमोहजरामृत्यून् विदित्वा, सप्त पञ्चेन्द्रियाणि बुद्धिमनसी च त्यक्त्वा सुखी भवेत्यर्थो बोध्यः।

[ भाषाटीका ] एक निश्चयात्मक बुद्धि से कार्य और अकार्य इन दो का निर्णय करके साम दाम दण्ड भेद इन चार उपायों से शत्रु मित्र उदासीन इन तीनों को वश में करे। पाँच इन्द्रियों को जीत कर सन्धि युद्ध-चढ़ाई आदि छ गुणों को समझकर और सात दूषणों को-( स्त्री, जुआ, शिकार, मदिरा, बुरी जबान, कठोर दण्ड देना, धन को व्यर्थ खोना, इन सात दूषणों को ) छोड़ कर राजा सुख से राज्य करे ॥ ४९ ॥

**एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते।**
**सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः॥ ५० ॥**

[ अन्वयः ] विषरसः एकं हन्ति, च शस्त्रेण एकः वध्यते, मन्त्रविप्लवः [ तु ] सराष्ट्रं सप्रजं राजानं हन्ति ॥

[ विग्रहः ] विषयस्य रसः-विषरसः। राष्ट्रेण सहितः-सराष्ट्रस्तं सराष्ट्रम्। प्रजया सहितः सप्रजः, तम्। मन्त्रस्य विप्लवः—मन्त्रविप्लवः॥ ५० ॥

[अर्थः] विषरसः=गरलरसः। एकम्=एकाकिनं। भोक्तारमेव। हन्ति=मारयति। च=किञ्च। शस्त्रेण=आयुधेन। एकः=एकाकी एव। वध्यते=हन्यते। मन्त्रविप्लवः=मन्त्रभेदस्तु। सराष्ट्रं=राज्यसहितं। सप्रजं=सलोकम्। राजानं=नृपम्। हन्ति=मारयति।

[भाषाटीका] जहर (विष) तो केवल खाने वाले को ही मारता है, पर मन्त्र ( सलाह ) का भेद ( फूट जाना असमय में शत्रुपर प्रकट हो जाना ) तो सम्पूर्ण राज्य व प्रजा के सहित राजा का भी नाश कर देता है॥ ५० ॥

---

१ 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥' इति श्रुतेः।

**एकः स्वादु न भुञ्जीत, एकश्चार्थान्न चिन्तयेत् ।**
**एको न गच्छेदध्वानं, नैकः सुप्तेषु जागृयात् ॥ ५१ ॥**

[ अन्वयः ] एकः स्वादु न भुञ्जीत, च एकः अर्थान् न चिन्तयेत्, एकः अध्वानं न गच्छेत्, एकः सुप्तेषु न जागृयात् ॥

[ अर्थः ] एकः=एकाकी । स्वादु=मिष्टान्नम् । न भुञ्जीत=न भक्षयेत् । नाऽभ्यवहरेत् । च=किञ्च । एकः=एकाकी । अर्थान्=कर्त्तव्यकर्माणि । विवादग्रस्तान् विषयान् । न चिन्तयेत्=न विचारयेत् । न निर्णयेत् । किञ्च एकः=एकाकी । अध्वानं=मार्गम् । न गच्छेत्=न प्रचलेत् । एकः—एकाकी । सुप्तेषु=सहचारिषु सुप्तेषु सत्सु । न जागृयात्=न प्रबुद्धस्तिष्ठेत् ।

[ भाषाटीका ] मनुष्य को चाहिये कि अकेले स्वादु मिष्टान्न भोजन न करे, अकेले किसी विषय का निर्णय न करे, अकेले रास्ता न चले, और सब के सो जाने पर अकेले न जागे क्योंकि ऐसे समय भूत प्रेत बाधा होने का भय हो सकता है ॥

**एकमेवाऽद्वितीयं तद्यद्राजन्नाऽवबुध्यसे ।**
**सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ५२ ॥**

[ अन्वयः ] राजन् ! पारावारस्य नौः इव एकम् एव अद्वितीयं स्वर्गस्य सोपानं यत् सत्यं—तत् न अवबुध्यसे ॥

[ विग्रहः ] न द्वितीयम् अद्वितीयम् ।

[ अर्थः ] राजन्=हे धृतराष्ट्र ! पारावारस्य=सागरस्य । नौरिव=पोत इव । तरणिरिव । एकमेव अद्वितीयम्=द्वितीयरहितम्, अनुपममेकमेव । स्वर्गस्य=सुरलोकस्य । सोपानम्=आरोहणम् । 'आरोहणं स्यात्सोपान'मित्यमरः । यत्सत्यं=यत्सत्यभाषणरूपं साधनम् । तत्=तत्स्वर्गसाधनं सत्यम् । नावुध्यसे=त्वं न परिपालयसि । न जानासि च ।

( भाषाटीका ) हे राजन् ! जैसे समुद्र को पार करने के लिए जहाज ही एक मात्र साधन है, दूसरा नहीं, इसी तरह स्वर्ग को प्राप्त करने की सीढ़ी सत्य ही है, परन्तु उसे आप नहीं जान रहे हैं । अर्थात् सच्चे अधिकारी युधिष्ठिर को राज्य न देकर आप सत्य का पालन नहीं कर रहे हैं ॥ ५२ ॥

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५३ ॥

[अन्वयः] क्षमावताम् एकः दोषः उपपद्यते, द्वितीयः न, यत् क्षमया युक्तम् एनं—जनः अशक्तं मन्यते ॥

[ विग्रहः ] क्षमा अस्त्येषां ते क्षमावन्तः, तेषां क्षमावताम् । न शक्तः-अशक्तः, तम् अशक्तम् ।

[ अर्थः ] क्षमावतां=क्षमाशीलानाम् । तितिक्षापराणाम् । एकः=एक एव । दोषः=दूषणम् । उपपद्यते=सम्भाव्यते । सम्भवति वा । द्वितीयः=अपरः । न=नैवोपपद्यते । यत्—क्षमया=क्षान्त्या । युक्तं=समन्वितम् । क्षमापरायणम् । एनं=क्षमावन्तम् । जनः=साधारणो लोकः । अशक्तम्=असमर्थम् । मन्यते=अवधारयति । क्षमाया अयमेव दोषो नेतर इति भावः ।

[ भाषाटीका ] क्षमा करनेवाले मनुष्य को लोग असमर्थ ( निर्बल ) समझते हैं—यही एक क्षमा करने में दोष है दूसरा नहीं ॥ ५३ ॥

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां, शक्तानां भूषणं क्षमा ॥ ५४ ॥

[ अन्वयः ] ( परन्तु ) अस्य सः दोषः न मन्तव्यः । हि क्षमा परमं बलम् । हि अशक्तानां क्षमा गुणः । शक्तानां क्षमा भूषणम् ॥

[ विग्रहः ] न शक्ताः, अशक्ताः, तेषाम्-अशक्तानाम् ॥

[ अर्थः ] (परन्तु-) अस्य=क्षमावतः । सः=अशक्तत्वाख्यः । दोषः=दूषणम् । न मन्तव्यः=नावधारणीयः । न निश्चेयः । हि=यतः । क्षमा=क्षान्तिः । परमम्=उत्कृष्टम् । प्रधानम् । बलं=पराक्रमः । हि=यतः । अशक्तानां=निर्बलानाम् । क्षमा=क्षान्तिः । गुणः=विशेषकः । शक्तानां=समर्थानान्तु । क्षमा=क्षान्तिः । भूषणम्=अलङ्कारो भवति ।

[भाषाटीका] (परन्तु) क्षमा को दोष नहीं समझना चाहिए । क्योंकि क्षमा एक

बड़ा भारी बल है। असमर्थ के लिए तो क्षमा गुण ही है, और समर्थ के लिए भी क्षमा भूषण है ॥ ५४ ॥

**क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते।**
**शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५५ ॥**

[अन्वयः] लोके क्षमा वशीकृतिः। क्षमया किं न साध्यते ?। यस्य करे शान्तिखड्गः ( अस्ति तस्य ) दुर्जनः किं करिष्यति ? ॥ ५५ ॥

[विग्रहः] न वशः-अवशः, अवशस्य वशं करणं वशीकृतिः। शान्तिरेव खड्गः शान्तिखड्गः। दुष्टो जनः दुर्जनः ॥

[ अर्थः ] लोके=जगति । क्षमा=शान्तिः। वशीकृतिः= वशीकरणम्। वशीकरणमन्त्रो वा। क्षमया=तितिक्षया। किं= किं कार्यम्। न साध्यते=न निष्पाद्यते ?। अपि तु सर्वं कार्यं साध्यते इत्याशयः। यस्य=यस्य पुंसः। करे=हस्ते। शान्ति-खड्गः=उपशमखड्गः। क्षमारूपः करवालः। 'अस्ती'ति शेषः। ( तस्य ) दुर्जनः=खलः। किं करिष्यति=किं विधास्यति ?। न किमपीत्यर्थः। [ इदमग्रिमश्लोकेन सह सम्बध्यते ]।

[ भाषाटीका ] संसार में क्षमा ही वशीकरण मन्त्र है। क्षमा से कौन काम सिद्ध नहीं होता ?। जिसके हाथ में शान्ति ( क्षमा ) रूपी तलवार है उसका दुष्ट लोग क्या बिगाड़ सकते हैं ? कुछ भी नहीं ॥ ५५ ॥

'क्षमा खड्गः करे यस्य किं करिष्यति दुर्जनः' इत्युक्तमुपपादयति-अतृण इति।

**अतृणे पतितो वह्निः स्वयमेवोपशाम्यति।**
**अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५६ ॥**

[ अन्वयः ] (यतः) अतृणे पतितः वह्निः स्वयमेव उपशाम्यति। परम् अक्षमावान् आत्मानं दोषैः च योजयेत् ॥

[ विग्रहः ] नास्ति तृणं यस्मिन् तत् अतृणं, तस्मिन् अतृणे।

[ अर्थः ] यतः-अतृणे = तृणादिरहिते। पतितः=निपतितः। वह्निः=अग्निः। स्वयमेव=आत्मनैव। विनोपायेनैव। उपशाम्यति= शान्तो भवति। नश्यति। परं=परन्तु। किन्तु। अक्षमावान्=

---

१ 'क्षान्तिखड्गः' पा०।

क्षमारहितः। क्रोधी तु। आत्मानं=स्वम्। दोषैश्च=अपराधैश्च। पापैश्च। योजयेत्=संयोजयेत्। विनिपातयेत्। विनाशयेत्। 'परम् आत्मानं च दोषैर्योजये'दिति कस्यचिद्व्याख्यानन्तु न युक्तम्।

[ भाषाटीका ] क्योंकि जहाँ घास तृण आदि नहीं है वहाँ गिरी हुई अग्नि जैसे स्वयं बुझ जाती है, बढती नहीं, वैसे ही क्षमाशील मनुष्य के सामने सभी प्रकार के झगडे स्वयं शान्त हो जाते हैं। परन्तु जो क्रोधी व अशान्त मनुष्य हैं वे सामान्य बात में ही वृथा कलह बढाकर बहुत कष्ट उठाते हैं। अर्थात् क्षमा वाले के सब उपद्रव शान्त हो जाते हैं, परन्तु क्रोधी मनुष्य थोडी सी बात में बडा बडा झगडा खडाकर लेते हैं। अतः क्षमा ही श्रेष्ठ है ॥ ५६ ॥

एकद्व्यादिसङ्ख्याक्रमेण हिताऽहितवस्तूनि निर्दिशति-एक इति।

**एको धर्मः परं श्रेयः, क्षमैका शान्तिरुत्तमा।**
**विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५७ ॥**

[ अन्वयः ] धर्मः एकः परं श्रेयः, क्षमा एका उत्तमा शान्तिः, विद्या एका परमा तृप्तिः, एका अहिंसा सुखावहा ॥

[ विग्रहः ] न हिंसा-अहिंसा। सुखमावहति-सुखावहा।

[ अर्थः ] धर्मः एकः=धर्म एकः एव। परं श्रेयः=परमं कल्याणम्। सर्वश्रेष्ठो हितावहः। क्षमा एका=तितिक्षा एका। उत्तमा शान्तिः=सर्वश्रेष्ठा शान्तिदायिनी। विद्या एका=विद्या एकैव खलु। परमा तृप्तिः=उत्तमा तृप्तिप्रदा। एका अहिंसा=केवला अहिंसा। सुखावहा=सुखप्रदा।

[ भाषाटीका ] संसार में एक वस्तु कौन कौन हितकारक हैं सो बताते हैं-इकल्ला भी धर्म-परम कल्याणकारक है। क्षमा सर्वश्रेष्ठ शान्ति है। विद्या एक परमतृप्ति [तृप्तिदायक] है। एक अहिंसा भी परम सुख देनेवाली है ॥ ५७ ॥

**द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव।**
**राजानं चाऽविरोद्धारं, ब्राह्मणं चाप्रवासिनम् ॥ ५८ ॥**

[ अन्वयः ] अविरोद्धारं राजानम् अप्रवासिनं ब्राह्मणं च-इमौ द्वौ भूमिः-सर्पः बिलशयानिव-ग्रसते।

[ विग्रहः ] विले शेरते इति विलशयाः, तान् विलशयान् । न विरोद्धा अविरोद्धा, तम्–अविरोद्धारम् । प्रवसते तच्छीलः प्रवासी, न प्रवासी न अप्रवासी, तम्–अप्रवासिनम् ।

[ अर्थः ] अविरोद्धारम्=विरोधपराङ्मुखम् । युद्धविमुखम्। राजानं=नृपम् । अप्रवासिनं=देशान्तरगमनादिपराङ्मुखम् । ब्राह्मणञ्च=विप्रञ्च । इमौ द्वौ=द्वाविमौ । भूमिः=पृथ्वी । सर्पः=भुजङ्गः । विलशयानिव=विलनिवासिनो मूषकादीनिव । ग्रसते=भक्षयति । तौ त्वरितं विनश्यत इत्यर्थः ।

[ भाषाटीका ] जो राजा शत्रुओं से युद्ध नहीं करता, तथा जो ब्राह्मण भिक्षा व यज्ञ आदि के लिए देशान्तर [ बाहर ] नहीं जाता उसे–भूमि वैसे ही खा जाती है जैसे–विल में रहने वाले ( चूहे आदि ) जीवों को सांप खा जाता है । अर्थात् वे दोनों शीघ्र ही नष्ट हो जाते हैं ॥ ५८ ॥

**द्वे कर्मणी नरः कुर्वन्नस्मिंल्लोके विरोचते ।**
**अब्रुवन् परुषं किञ्चिदसतोऽनर्चयंस्तथा ॥ ५९ ॥**

[ अन्वयः ] द्वे कर्मणी कुर्वन् नरः अस्मिन् लोके विरोचते । किञ्चित् परुषम्, अब्रुवन्, तथा असतः अनर्चयन् ॥

[ अर्थः ] द्वे कर्मणी=वक्ष्यमाणं कर्मद्वयम् । कुर्वन्=अनुतिष्ठन् । आचरन् । नरः=पुमान् । अस्मिन् लोके=अस्मिन् जगतीतले । विरोचते=शोभते । प्रकाशते । किञ्चित्=किमपि । स्वल्पमपि । परुषं=क्रूरं वाक्यम् । अब्रुवन्=अकथयन् । तथा=तथैव । असतः=नीचान् । नटनर्तकादीन्वा । अनर्चयन्=अपूजयन् । ताननुवर्त्तमान इति यावत् । [ कञ्चिदितिपाठे—कमपि पुरुषं प्रति परुषमब्रुवन्नित्यर्थो बोध्यः ] ।

[ भाषाटीका ] इस संसार में दो काम करने से मनुष्य सदा शोभित होते हैं । एक तो—किसी को भी कुछ भी कड़ी बात नहीं कहने से, दूसरे असज्जन (नीच) लोगों का आदर न करने से ॥ ५९ ॥

**द्वाविमौ पुरुषव्याघ्र ! परप्रत्ययकारिणौ ।**
**स्त्रियः कामितकामिन्यो, लोकः पूजितपूजकः ॥ ६० ॥**

[ अन्वयः ] पुरुषव्याघ्र ! इमौ द्वौ परप्रत्ययकारिणौ (भवतः), स्त्रियः कामितकामिन्यः, लोकः पूजितपूजकः ॥

[ विग्रहः ] पुरुषो व्याघ्र इव–पुरुषव्याघ्रः । तत्सम्बुद्धौ हे पुरुषव्याघ्र । परस्मिन् प्रत्ययः–परप्रत्ययः । परप्रत्ययेन कुरुतः तच्छीलौ-परप्रत्ययकारिणौ । [ यद्वा परप्रत्ययकारी च परप्रत्ययकारिणी च परप्रत्ययकारिणौ ] । कामितं कामयन्ते तच्छीलाः–कामितकामिन्यः । पूजितस्य पूजकः–पूजितपूजकः ।

[ अर्थः ] पुरुषव्याघ्र=हे पुरुषसिंह । हे धृतराष्ट्र ! । इमौ द्वौ=वक्ष्यमाणौ द्वौ जनौ । परप्रत्ययकारिणौ=परविश्वासकारिणौ । परविश्वासेन कार्यकारिणौ । 'भवत' इति शेषः । तौ द्वावाह–स्त्रिय इति । स्त्रियः=योषितः । कामितकामिन्यः=पररमणीकामितपुरुषाभिलाषिण्यः । परस्त्रीकामितकामुकासक्ताः । स्त्रीलम्पटकामुकासक्ताः । भवन्तीति शेषः । लोकः=जनश्च । पूजितपूजकः=अर्चितपूजकः । परपूजितपूजापरायणः । भवतीति शेषः ॥

[ भाषाटीका ] हे राजन् ! ये दोनों (स्त्रियाँ और जनता) दूसरे के विश्वास पर चलने वाले होते हैं । क्योंकि स्त्रियाँ दूसरी कामिनियों द्वारा चाहे गए पुरुषों पर ही आसक्त होती हैं और लोग (जनता) भी दूसरों के द्वारा पूजितों की ही पूजा करते हैं ॥ ६० ॥

**द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।**
**यश्चाऽधनः कामयते, यश्च कुप्यत्यनीश्वरः ॥ ६१ ॥**

[ अन्वयः ] यः च अधनः कामयते यश्च अनीश्वरः कुप्यति–इमौ द्वौ शरीरपरिशोषिणौ तीक्ष्णौ कण्टकौ ॥

[ विग्रहः ] शरीरं परिशोषयतस्तच्छीलौ शरीरपरिशोषिणौ । नास्ति धनं यस्यासौ अधनः । न ईश्वरः अनीश्वरः ।

[ अर्थः ] यश्च=यो वै । अधनः=निर्धनः सन्नपि । कामयते=कामोपभोगमिच्छति । भूषणवस्त्रमिष्टान्नादिकमिच्छति । यश्च=

यो वा । अनीश्वरः=असमर्थः । अशक्तः सन् । अप्रभुः सन्नपि । कुप्यति=क्रुध्यति । क्रोधं करोति । इमौ द्वौ=अधनः कामी, अनीशः क्रोधी चेति द्वाविमौ । शरीरपरिशोषिणौ=शरीर-सन्तापकारिणौ । तीक्ष्णौ=निशितौ । कण्टकौ=शूलौ । 'भवत' इति शेषः ।

[ भाषाटीका ] जो दरिद्र होकर भी कामोभोग ( ऐश व आराम ) चाहता है, और जो असमर्थ होकर भी क्रोध करता है--ये दोनों ही शरीर ( मन ) को पीडा पहुँचाने वाले दो तीखे काँटे हैं ॥ ६१ ॥

**द्वावेव न विराजेते विपरीतेन कर्मणा ।**
**गृहस्थश्च निरारम्भः, कार्यवांश्चैव भिक्षुकः ॥ ६२ ॥**

[ अन्वयः ] निरारम्भः च गृहस्थः, कार्यवान् चैव भिक्षुकः--द्वौ एव विपरीतेन कर्मणा न विराजेते ॥

[ विग्रहः ] गृहे तिष्ठतीति गृहस्थः । आरम्भान्निर्गतः निरारम्भः । कार्य-मस्यास्तीति कार्यवान् ।

[ अर्थः ] निरारम्भश्च=आरम्भशून्यश्च । उदासीनश्च । अल-सश्च । गृहस्थः=गृही । कार्यवांश्चैव=कार्यव्यापृतश्च । कर्मनिरतः । भिक्षुकश्च=सन्यासी च । द्वावेव=इमौ द्वावेव । विपरीतेन= विरुद्धेन । स्वाश्रमविपरीतेन । कर्मणा=कार्येण । न विराजेते = न शोभेते ।

[भाषाटीका] बेकाम बैठा हुआ (आलसी) गृहस्थ, तथा नाना कार्यों में फंसा हुआ संन्यासी--ये दोनों ही अपने २ आश्रमों के विरुद्ध आचरण करने के कारण शोभा को नहीं प्राप्त होते हैं । [ अर्थात् गृहस्थ का तो धर्म है कार्य करना, एवं संन्यासी का कामों में नहीं फँसना ही धर्म है । इससे विरुद्ध करने से इनकी निन्दा ही होती है, शोभा नहीं ] ॥ ६२ ॥

**द्वाविमौ पुरुषौ राजन् ! स्वर्गस्योपरि तिष्ठतः ।**
**प्रभुश्च क्षमया युक्तो, दरिद्रश्च प्रदानवान् ॥ ६३ ॥**

१ 'द्वावेतौ' पा० ।

[ अन्वयः ] हे राजन् । प्रभुश्च क्षमया युक्तः, दरिद्रश्च प्रदानवान्: इमौ द्वौ पुरुषौ-स्वर्गस्य उपरि तिष्ठतः ॥

**[ अर्थः ] राजन्=हे नृपते ! प्रभुश्च=ईश्वरश्च । क्षमया= क्षान्त्या । युक्तः=सहितः । दरिद्रश्च=निर्धनश्च । प्रदानवान्= दानपरायणः । दाता । इमौ द्वौ पुरुषौ-स्वर्गस्य=सुरलोकस्य । उपरि=ऊर्ध्वं । तिष्ठतः=स्थितिं लभेते । स्वर्गे महतीं पूजां लभेते इति यावत् ।**

[ भाषाटीका ] हे राजन् ! जो मनुष्य राजा या प्रभु ( समर्थ ) होकर भी क्षमा करता है, और जो दरिद्र होकर भी दान करता है, ये दोनों ही स्वर्ग से भी ऊपर रहते हैं । अर्थात् स्वर्ग से भी उत्तम ( ब्रह्मलोक या वैकुण्ठ आदि ) लोक में निवास करते हैं ॥ ६३ ॥

**न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।**
**अपात्रे प्रतिपत्तिश्च, पात्रे चाऽप्रतिपादनम् ॥ ६४ ॥**

[ अन्वयः ] न्यायागतस्य द्रव्यस्य द्वौ अतिक्रमौ बोद्धव्यौ, अपात्रे प्रतिपत्तिः च, पात्रे अप्रतिपादनं च ॥

[ विग्रहः ] न्यायादागतः---न्यायागतः । न पात्रम् अपात्रं, तस्मिन् अपात्रे । न प्रतिपादनम्-अप्रतिपादनम् ।

**[अर्थः] न्यायागतस्य=न्यायोपार्जितस्य । द्रव्यस्य=धनस्य । द्वौ=वक्ष्यमाणौ द्वौ । अतिक्रमौ=दुरुपयोगौ । बोद्धव्यौ=ज्ञेयौ । अपात्रे=अयोग्ये । अनधिकारिणि । प्रतिपत्तिः=दानम् । [इत्येकः] पात्रे=सत्पात्रे । अप्रतिपादनं च=अदानञ्च । [-इति द्वितीयः ] ।**

[ भाषाटीका ] न्याय से उपार्जित धन का दो ही प्रकार से दुरुपयोग समझना चाहिए । एक तो-अपात्र को देने से, दूसरे दान के योग्य सत्पात्र को नहीं देने से ६४

**द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।**
**धनवन्तमदातारं, दरिद्रं चाऽतपस्विनम् ॥ ६५ ॥**

[ अन्वयः ] गले दृढां शिलां बद्ध्वा-अदातारं धनवन्तम् अतपस्विनं दरिद्रं च-द्वौ अम्भसि निवेष्टव्यौ ॥

[ विग्रहः ] प्रशस्तं धनमस्त्यस्य धनवान्, तम् धनवन्तम् । न दाता अदाता, तम् अदातारम् । प्रशस्तं तपोऽस्यास्तीति तपस्वी, तं तपस्विनम् ।

[ अर्थः ] गले=ग्रीवायाम् । दृढां=भारवतीम् । शिलां=दृषदम् । प्रस्तरम् । 'पाषाणप्रस्तरग्रावोपलाऽश्मानः शिला दृषत्' इत्यमरः । बद्ध्वा=निबध्य । अदातारम्=अदानशीलम् । धनवन्तं=धनिनम् । अतपस्विनं=तपश्चरणविमुखम् । दरिद्रं च=निर्धनञ्च । दृष्ट्वेति शेषः । [ इमौ द्वौ= ] अम्भसि=जले । निवेष्टव्यौ । प्रक्षेपणीयौ । निपातनीयौ ।

[ भाषटीका ] जो धनी होकर भी दान नहीं देता है, एवं जो दरिद्रता से दुःख पाता हुआ भी तपस्या नहीं करता है इन दोनों को बड़ा सा पत्थर गले में बांधकर डुबो देना चाहिए ॥ ६५ ॥

**द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।**
**परिव्राड्योगयुक्तश्च, रणे चाभिमुखो हतः ॥ ६६ ॥**

[ अन्वयः ] पुरुषव्याघ्र ! योगयुक्तश्च परिव्राट्, रणे अभिमुखः हतश्च इमौ द्वौ सूर्यमण्डलभेदिनौ—भवतः ॥ ६६ ॥

[ विग्रहः ] पुरुषो व्याघ्र इव पुरुषव्याघ्रः, तत्सम्बुद्धौ हे पुरुषव्याघ्र । सूर्यस्य मण्डलं सूर्यमण्डलं सूर्यमण्डलं भिन्तस्तच्छीलौ सूर्यमण्डलभेदिनौ । योगेन युक्तः—योगयुक्तः । यद्वा युक्तो योगोऽनेनेति बहुव्रीहिः । [ वाऽऽहिताग्न्यादित्वाद्युक्तशब्दस्य परप्रयोगः ] ।

[ अर्थः ] पुरुषव्याघ्र=हे पुरुषश्रेष्ठ । योगयुक्तश्च=योगी च । सिद्धयोगश्च । परिव्राट्=संन्यासी । विरक्तश्च । रणे=युद्धे । अभिमुखः=संमुखः । हतश्च=व्यापादितश्च । मृतश्च । इमौ द्वौ=सूर्यमण्डलभेदिनौ=भास्करमण्डलभेदिनौ । 'भवत' इति शेषः ।

[ कोशः ] 'चक्रवालन्तु मण्डलम्' इत्यमरः ।

[ भाषटीका ] जिसने योग सिद्ध कर लिया है ऐसा योगी, और युद्ध में सामने मारा गया योद्धा—ये दोनों सूर्य के मण्डल को भेद ( फोड़ ) कर ऊपर ( ब्रह्मलोक ) जाते हैं ॥ ६६ ॥

[ श्रेष्ठ तीन वस्तुएँ ]

**त्रयोपा[१]या मनुष्याणां श्रूयन्ते भरतर्षभ !।**
**कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६७ ॥**

[ अन्वयः ] भरतर्षभ ! मनुष्याणां कनीयान् मध्यमः श्रेष्ठः [ इति ] त्रयः उपायाः श्रूयन्ते—इति वेदविदः विदुः ॥ ६७ ॥

[ विग्रहः ] भरत ऋषभ इव-भरतर्षभः, तत्सम्बुद्धौ-हे भरतर्षभ । अतिशयेन युवा कनीयान् । वेदं विदन्तीति वेदविदः ।

( अर्थः ) भरतर्षभ=हे भरतश्रेष्ठ । मनुष्याणां=मानुषाणां । कनीयान्=कनिष्ठः । अधमः । मध्यमः=मध्यः । श्रेष्ठः=उत्तमः । त्रयोपायाः=त्रय उपायाः । (छान्दसोऽत्र गुणः सन्धिः) । श्रूयन्ते= शास्त्रेषु श्रूयन्ते । ( इति=इमे ) इति=इत्थं । वेदविदः=वेद-वित्तमाः । शास्त्रज्ञाः । विदुः = कथयन्ति । जानन्ति ।

[ भाषाटीका ] हे राजन् ! संसार में तीन प्रकार के उपाय होते हैं अधम मध्य और उत्तम । ऐसा वेदों के जानने वाले कहते हैं ॥ ६७ ॥

**त्रिविधाः पुरुषाः राजन्नुत्तमाधममध्यमाः ।**
**नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ६८ ॥**

[ अन्वयः] राजन् ! उत्तमाऽधममध्यमाः त्रिविधाः पुरुषाः भवन्ति, तान् त्रिविधेष्वेव कर्मसु यथावत् नियोजयेत् ॥ ६८ ॥

[ विग्रहः ] उत्तमश्च मध्यमश्च अधमश्च उत्तमाऽधममध्यमाः ।

( अर्थः ) राजन्=हे नृपते । उत्तमाऽधममध्यमाः=श्रेष्ठ-निकृष्टमध्यमाः । त्रिविधाः=त्रिप्रकाराः । पुरुषाः=पुमांसः । 'सन्ती'तिशेषः । तान्=उत्तमाऽधममध्यमान् पुंसः । त्रिविधे-ष्वेव=उत्तमाधममध्यमेष्वेव । कर्मसु=कार्येषु । यथावत्=यथा-योग्यम् । उत्तमे-उत्तमम् । अधमेऽधमम् । मध्यमे मध्यममित्येवं रीत्या । नियोजयेत्=विनियोजयेत् ।

---

१ 'त्रयो न्याया' इति पा० ।

[ भाषाटीका ] हे राजन् ! इस संसार में पुरुष भी तीन प्रकार के हैं, उत्तम अधम मध्यम । इनको क्रमशः उत्तम अधम मध्यम कामों (उपायों) में लगावें ॥

**त्रय एवाऽधना राजन् ! भार्या दासस्तथा सुतः ।**
**यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ६९ ॥**

[ अन्वयः ] राजन् ! भार्या दासः तथा सुतः ( इमे ) त्रयः एव, अधनाः । ते यत् समधिगच्छन्ति तत् धनं—यस्य ते तस्य ( भवति ) ॥

[ विग्रहः ] नास्ति धनं येषान्ते अधनाः ।

[ अर्थः ] राजन्=हे नृप ! भार्या=पत्नी । दासः=भृत्यः । तथा=तथैव । सुतः=पुत्रः । (इमे) त्रय एव—अधनाः=धनरहिताः । नैते धनस्वामिनो भवितुमर्हन्तीत्यर्थः । ते=भार्यादाससुताः । यत्=यद्धनम् । समधिगच्छन्ति=लभन्ते । उपार्जयन्ति च । तद्धनं= तद्द्रव्यम् । यस्य=यस्य पुंसः । ते भार्यादासपुत्रा भवन्ति । तस्य=तस्य भवति ।

[ भाषाटीका ] हे राजन् ! भार्या ( स्त्री ), दास ( गुलाम ) व पुत्र ये तीनों धन के स्वामी नहीं होते । अतः ये जो धन पैदा करते हैं उस धन पर इनके स्वामी ( मालिक ) का ही अधिकार होता है ॥ ६९ ॥

**हरणं च परस्वानां परदाराभिमर्शनम् ।**
**सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ७० ॥**

[ अन्वयः ] परस्वानां च हरणं, परदाराभिमर्शनं, च सुहृदः परि-त्यागः ( इमे ) त्रयः दोषाः क्षयावहाः ( भवन्ति ) ॥

[ विग्रहः ] परस्य स्वाः परस्वाः, तेषां-परस्वानाम् । परस्य दाराः परदाराः,परदाराणामभिमर्शनं परदाराभिमर्शनम् । क्षयमावहन्तीति क्षयावहाः।

[ अर्थः ] परस्वानां=परकीयधनानाम् । हरणं च-बलाद्ग्रह-णञ्च । परदाराभिमर्शनं=परस्त्रीगमनम् । परपत्नीहरणं वा । च=किञ्च । सुहृदः=मित्रस्य । परित्यागः=परिवर्जनम् । विश्वास-घातः । [ इमे- ] त्रयः दोषाः=इमानि त्रीणि दूषणानि । पुंसां-क्षयावहाः=विनाशहेतवः । (भवन्ति) ।

[ भाषाटीका ] दूसरे की वस्तुओं को जबरदस्ती छीन लेना ( चोरी व डाका ), परस्त्रीगमन, मित्र को छोड़ देना, (मित्र से विश्वासघात या विरोध) ये तीन दोष मनुष्य का नाश कर देते हैं।* इसलिए चोरी व्यभिचार व विश्वासघात इन तीन दोषों से बचना चाहिए ॥ ७० ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७१ ॥**

[ अन्वयः ] कामः क्रोधः तथा लोभः—इदम् त्रिविधम् आत्मनः नाशनं नरकस्य द्वारम् । तस्मात् (विद्वान्) एतत् त्रयं त्यजेत् ॥

[ अर्थः ] कामः=अभिलाषः । क्रोधः=कोपः । तथा=तथैव । लोभः=प्रलोभः । लालसा । इदम्=एतत् । त्रिविधं=त्रिप्रकारम् । आत्मनः=स्वस्य । नाशनं=विनाशकारकम् । नरकस्य=निरयस्य च । द्वारम्=प्रतीहारः । तस्मात्=तस्माद्धेतोः । विद्वान्-एतत्त्रयं= कामादित्रयम् । त्यजेत्=परित्यजेत् । जह्यात् ।

[ कोशः ] 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । 'कोपक्रोधाऽमर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः ।

[ भाषाटीका ] काम क्रोध लोभ ये तीन आत्मा को नाश करने वाले नरक के दर्वाजे हैं । इसलिए इनको छोड़ देना चाहिए ॥ ७१ ॥

**वरप्रदानं राज्यं च पुत्रजन्म च भारत ! ।**
**शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥ ७२ ॥**

[ अन्वयः ] हे भारत ! वरप्रदानं, राज्यं च, पुत्रजन्म च, शत्रोः कृच्छ्रात् मोक्षणं च, त्रीणि एकं च तत्समं ( भवति ) ॥

[ विग्रहः ] वरस्य प्रदानं वरप्रदानं । पुत्रस्य जन्म पुत्रजन्म ।

[अर्थः] भारत=हे कौरवश्रेष्ठ । हे राजन् ! वरप्रदानं=वरदानम् । देवद्विजगुरुप्रसादाद्वरप्राप्तिः । राज्यं च=राज्यलाभश्च । पुत्रजन्म च=सुतोत्पत्तिश्च । [एतत्त्रयं] शत्रोः=वैरिणः । कृच्छ्रात्= कष्टात् । विपत्तेः । शत्रोरुद्भूताया विपत्तेः । मोक्षणञ्च=शत्रोरुद्धरणञ्च । त्रीणि=वरप्रदानादीनि त्रीणि । एकञ्च=शत्रोरुद्धारश्चेत्येकञ्च । तत्समम्=वरदानादित्रयसदृशम् । चत्वारीमानि

समानसुखदानि भवन्तीति वाऽर्थः । त्रयाणां प्रकरणा'त्रीणि चैकञ्च'ति रीत्योपादानम् ।

यद्वा-वरप्रदानं, राज्यञ्च, तत्रापि पुत्रजन्मेति समुदितानां त्रयाणामेकत्र सत्त्वे यत्सुखं तत्, शत्रुमोक्षजन्यं [ शत्रुता-निरासजन्यं वा ] सुखमिति च उभयं तुल्यमेव । एवञ्च दुर्योधनशत्रुभूतस्य युधिष्ठिरस्य तदुद्भूताया विपत्तेर्मोक्षणेन महानानन्दस्त्वयाऽनुभूयतां, दीयतां तद्राज्यं, निरस्यतां शत्रुते-त्यर्थो बोध्यः ।

[ भाषाटीका ] वरलाभ ( अभीष्ट वस्तु की प्राप्ति ) राज्यलाभ, पुत्रलाभ ये तीन (लाभ) और चौथा शत्रु के ऊपर आई हुई घोर विपत्ति से उसे बचना (या शत्रु की विपत्ति से बचाना) ये समान हैं। अर्थात् वरलाभ राज्य लाभ व पुत्रलाभ इन तीनों लाभो में जो आनन्द है उसके बराबर ही शत्रु को आई हुई विपत्ति से बचना ( या शत्रु की विपत्ति से बचाना ) इसमें आनन्द है । अतः युधिष्ठिर से मेल कर आने वाली विपत्ति ( युद्ध ) से बचिए । या युधिष्ठिर को दुःख से छुड़ाकर राज्य पर बैठा उससे सन्धि कीजिए ॥ ७२ ॥

**भक्तं च भजमानं च तवास्मीति च वादिनम् ।**
**त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न सन्त्यजेत् ॥ ७३ ॥**

[ अन्वयः ] भक्तं च, भजमानं च, तव अस्मि इति वादिनञ्च—एतान् त्रीन्—शरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ॥

[ अर्थः ] भक्तञ्च=अनुरक्तञ्च । भजमानञ्च=सेवमानं च । तवास्मीति वादिनं च=तव शरणागतोऽस्मीतिभाषिणञ्च । एतान् त्रीन्-शरणं=गृहम् । प्राप्तान्=आगतान् । विषमेऽपि= महत्यां विपत्तावपि । विपत्तिसम्भावनायामपि च । न=नैव । सन्त्यजेत्=परित्यजेत् ।

[ कोशः ] 'शरणं गृहरक्षित्रोः' इत्यमरकोशः ।

[ भाषाटीका ] भक्त, सेवा करनेवाला, 'आपकी शरण में आया हूँ, मेरी रक्षा करिए' ऐसे कहनेवाला—इन तीनों की रक्षा अवश्य करनी चाहिए, चाहे कैसी भी विपत्ति क्यों न आवे ॥ ७३ ॥

चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैः रभसैश्चारणैश्च ॥ ७४ ॥

[ अन्वयः ] महाबलेन राज्ञा तु चत्वारि वर्ज्यानि आहुः, पण्डितः तानि विद्यात् । अल्पप्रज्ञैः सह मन्त्रं न कुर्यात्, न दीर्घसूत्रैः, रभसैः, चारणैः च [ सह मन्त्रं न कुर्यात् ] ॥

[ विग्रहः ] महद्बलं यस्यासौ महाबलः, तेन महाबलेन । अल्पा प्रज्ञा येषान्ते अल्पप्रज्ञाः । तैः-अल्पप्रज्ञैः ।

[अर्थः] महाबलेन=बलवता । राज्ञा तु=नृपतिना तु । चत्वारि=चत्वारि कार्याणि, वर्ज्यानि=त्याज्यानि [इति] । आहुः=पण्डिता वदन्ति । पण्डितः=विद्वान् । तानि=चत्वारि त्याज्यानि तानि । विद्यात्=जानीयात् । तान्येवाह—अल्पप्रज्ञैः सह=स्वल्पमतिभिः सह । मन्त्रं=विचारं । न कुर्यात्=न कुर्वीत । दीर्घसूत्रैः=अलसैः । 'सह मन्त्रं न कुर्या'दिति सम्बन्धः । रभसैः=चञ्चलमतिभिः । त्वरा-परायणैः । 'सह मन्त्रं न कुर्या'दिति सम्बन्धः । चारणैश्च=प्रशंसापरैश्चाटुकारिभिश्च । 'सह मन्त्रं न कुर्या'दिति सम्बन्धः ।

[ कोशः ] 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः । 'चारणस्तु कुशीलवः' इत्यमरः ।

[ भाषाटीका ] महामति बलवान् राजा को चार काम न करने चाहियें,—स्वल्पमतियों से सलाह, दीर्घसूत्रों ( सुस्त आदमियों ) से सलाह, चञ्चल स्वभाववालों से सलाह, व खुशामदी, गाने बजाने वाले नट आदि से या डरपोक से सलाह । प्रत्येक समझदार आदमी को भी ये चार बातें जाननी चाहिये ॥ ७४ ॥

चत्वारि ते तात ! गृहे वसन्तु
श्रियाऽभिजुष्टस्य गृहस्थधर्मे ।

---

१ 'अलसैः' पा० । २ अरणैरिति च्छेदे—युद्धभीतैरित्यर्थः । रणं=युद्धम् ।

वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥ ७५ ॥

[ अन्वयः ] तात ! गृहस्थधर्मे ( वर्तमानस्य ) श्रिया अभिजुष्टस्य, ते गृहे वृद्धः ज्ञातिः, अवसन्नः कुलीनः, दरिद्रः सखा, अनपत्या भगिनी च [ एतानि ] चत्वारि वसन्तु ॥

[ विग्रहः ] गृहे तिष्ठन्तीति गृहस्थाः, गृहस्थानां धर्मः, गृहस्थधर्मः, तस्मिन् गृहस्थधर्मे । नास्त्यपत्यं यस्याः सा-अनपत्या ।

[ अर्थः ] तात !=हे राजन् ! गृहस्थधर्मे=गृहस्थाश्रमे । 'वर्तमानस्ये'ति शेषः । श्रिया=लक्ष्म्या । अभिजुष्टस्य=सेवितस्य । ते=तव । गृहे=भवने । वृद्धः=ज्ञानवयोवृद्धः । ज्ञातिः=स्वबन्धुबान्धवादिः । अवसन्नः=विपद्ग्रस्तः । निर्धनः । कुलीनः=सत्कुलप्रसूतः । दरिद्रः=निर्धनः । सखा=सुहृत् । अनपत्या=सन्तानरहिता । भगिनी=स्वसा च । [ एतानि ] चत्वारि वसन्तु=निवसन्तु । वृद्धस्य ज्ञातेरुपदेशपरत्वात्, कुलीनस्य व्यवहारसाधकत्वात्, दरिद्रस्य सुहृदो हितसाधकत्वात्, भगिन्याश्च बाललालन-भोजनादिव्यवस्थाकर्त्रीत्वेन गृहस्थाश्रमसुखसम्पादकत्वादिति भावः ।

[ भाषाटीका ] हे राजन् ! गृहस्थ धर्म में वर्तमान आपके लक्ष्मी सम्पन्न घर में ये चार व्यक्ति सदा रहें—( १ ) वृद्ध अनुभवी बन्धु बान्धव, ( २ ) विपत्ति-ग्रस्त सत्कुलीन, ( ३ ) दरिद्र मित्र, ( ४ ) सन्तानरहित बहिन ॥ ७५ ॥

चत्वार्याह महाराज ! साद्यस्कानि[1] बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७६ ॥

[ अन्वयः ] हे महाराज ! पृच्छते त्रिदशेन्द्राय बृहस्पतिः चत्वारि साद्यस्कानि आह, तानि इमानि मे निबोध ॥

[ विग्रहः ] महांश्चासौ राजा च महाराजः, तत्सम्बुद्धौ हे महाराज ! सद्यो भवानि साद्यस्कानि । त्रिदशानामिन्द्रः, त्रिदशेन्द्रः, तस्मै-त्रिदशेन्द्राय ।

१ कालाट्ठञिति ठञ् । बाहुलकाट्ठस्य कादेशः । इकारलोपो वा ।

[ अर्थः ] महाराज=हे नृपतिश्रेष्ठ ! पृच्छते=प्रश्नं कुर्वते। त्रिदशेन्द्राय=सुरेन्द्राय । देवराजाय । बृहस्पतिः=सुरगुरुः । चत्वारि, साद्यस्कानि=सद्यो जायमानानि। सद्यःफलप्रदानि च । आह=कथयति स्म । तानीमानि=चत्वारि तानि । मे=मम । मत्तः सकाशादित्यर्थः । निबोध=जानीहि ।

[ भाषाटीका ] हे महाराज ! बृहस्पति ने पूछने पर इन्द्र से चार बातें तुरन्त होने वाली ( या शीघ्र फल देने वाली ) बताई हैं, उन्हें मैं आप से कहता हूँ, ध्यान से सुनिए ॥ ७६ ॥

**देवतानां च सङ्कल्पमनुभावं च धीमताम् ।**
**विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७७ ॥**

[ अन्वयः ] देवतानां सङ्कल्पं च, धीमताम् अनुभावं च, कृत-विद्यानां विनयं, पापकर्मणां विनाशं ( च ) ॥

[विग्रहः] प्रशस्ता धीरस्त्येषां ते धीमन्तः, तेषां धीमताम् । कृता विद्या यैस्ते कृतविद्याः, तेषां कृतविद्यानाम् । पापं कर्म येषान्ते पापकर्माणः, तेषां ।

[ अर्थः ] देवतानां=देवानाम् । सङ्कल्पञ्च=मनोरथञ्च । धीमतां=बुद्धिमताम् । अनुभावं च=प्रभावञ्च । कृतविद्यानाम्=कृतविद्याऽभ्यासानाञ्च । विनयं च=नम्रताञ्च । पापकर्मणां=पापपरायणानां खलानाम् । विनाशञ्च=नाशञ्च । इमानि चत्वारि साद्यस्कान्याह । इमानि सद्यो भवन्तीति भावः ।

[ भाषाटीका ] ( १ ) देवताओं की इच्छा, तुरन्त फलती है ( २ ) बुद्धिमानों का प्रभाव तुरन्त बढ़ता है, ( या शीघ्र फलता है ), ( ३ ) विद्वानों का विनय शीघ्र बढ़ता है, या शीघ्र फलता है, ( ४ ) पापियों का विनाश-शीघ्र होता है । ( या पापियों के पापकर्म चोरी आदि उनको शीघ्र फल देते हैं ) ॥ ७७ ॥

**चत्वारि कर्माण्यभयङ्कराणि**
**भयं प्रयच्छन्त्ययथाकृतानि ।**
**मानाग्निहोत्रमुत मानमौनं**
**मानेनाऽधीतमुत मानयज्ञः ॥ ७८ ॥**

[अन्वयः] अभयङ्कराणि चत्वारि कर्माणि अयथाकृतानि भयं प्रयच्छन्ति, मानाग्निहोत्रम्, उत मानमौनं, मानेन अधीतम्, उत मानयज्ञः ॥

[ विग्रहः ] भयं कुर्वन्ति-तच्छीलानि भयङ्कराणि न भयङ्कराणि अभयङ्कराणि । न यथाकृतानि अयथाकृतानि । मानेनाग्निहोत्रम्-मानाग्निहोत्रम् । मानेन मौनं मानमौनम् । मानेन यज्ञः मानयज्ञः ।

**[अर्थः] अभयङ्कराणि=कल्याणकराण्यपि । चत्वारि कर्माणि=अग्निहोत्र-मौन-स्वाध्याय-यज्ञाख्यानि वक्ष्यमाणानि चत्वारि कर्माणि । अयथाकृतानि=अविधिना कृतानि चेत् । यथावदननुष्ठितानि चेत् । भयं=नरकभीतिम् । अधःपातम् । प्रयच्छन्ति=ददति । अयथाकृतानां स्वरूपमाह—मानेति । मानाग्निहोत्रम्=अभिमानेनाग्निहोत्रम् । संमानार्थं वाऽग्निहोत्रम् । उत=किञ्च । मानमौनम्=संमानार्थे दम्भार्थं वा तूष्णीम्भावः । मानेनाधीतम्=संमानलाभार्थमभिमानपूर्वकं वाऽध्ययनम् । उत=किञ्च । मानयज्ञः=संमानार्थं यज्ञः । इतीमानि सोपधिकानि विपरीतानि कृतानि चत्वारि भयजनकानि भवन्ति ।**

[ भाषाटीका ] हे राजन् ! अग्निहोत्र, मौन, स्वाध्याय, और यज्ञ ये चारों काम यद्यपि कल्याणकारक (स्वर्ग सुखप्रद) हैं। परन्तु येही चारो कार्य यदि संमान के लिए या दम्भ व अभिमानपूर्वक किए जावँ तो भय ( नरक आदि भय ) जनक होते हैं । इसलिए दम्भ व अभिमान व लोकैषणादि का त्याग करके ही अग्निहोत्रादि कर्म करने चाहिए ॥ ७८ ॥

**पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।**
**पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ ! ॥ ७९ ॥**

[ अन्वयः ] हे भरतर्षभ ! पिता, माता, अग्निः, आत्मा, गुरुः च, [ इति ] पञ्च—अग्नयः मनुष्येण प्रयत्नतः परिचर्याः ॥

**[अर्थः] भरतर्षभ=हे कुरुकुलश्रेष्ठ । पिता=जनकः । माता=जननी । अग्निः=संस्कृतोऽग्निः । आत्मा-स्वात्मा । गुरुश्च=आचार्यश्च । [-इति] पञ्च-अग्नयः=पञ्चाग्निकल्पा इमे पञ्च । पुरुषेण=**

पुंसा। प्रयत्नतः=विशेषतः। अत्यादरेण। सभयेन च। परिचर्याः=परिचरणीयाः, संसेवनीयाः। परिपालनीयाश्च।

[ भाषाटीका ] हे भरतश्रेष्ठ ! मनुष्य को अग्नितुल्यप्रभाववाले माता, पिता, अग्नि, और ( अपनी ) आत्मा और गुरु-इन पाँचों की बड़े यत्न से सेवा व रक्षा करनी चाहिए ॥ ७९ ॥

**पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् ।**
**देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ८० ॥**

[ अन्वयः ] लोके देवान्, पितॄन्, मनुष्यान्, अतिथिपञ्चमान् भिक्षून् च [ एतान् ] केवलं पञ्च एव पूजयन् यशः प्राप्नोति ॥

[ विग्रहः ] अतिथिः पञ्चमो येषान्ते अतिथिपञ्चमाः ।

[ अर्थः ] लोके-जगत्यस्मिन्। देवान्=विबुधान्। पितॄन्=अग्निष्वात्तादीन्, पितृलोकनिवासिनः, स्वपूर्वपुरुषांश्च। मनुष्यान्=सनकादिमनुष्यान्। मानवांश्च। अतिथिपञ्चमान्=अतिथिसहितान्। भिक्षून्=भिक्षुकांश्च। केवलं पञ्चैव=इमान् पञ्चैव देवान्। पूजयन्=अर्चयेन् मनुष्यः। यशः=कीर्तिम्। प्राप्नोति=लभते।

[ भाषाटीका ] इस संसार में देवता, पितृगण, मनुष्य ( बड़े भाई, चाचा आदि या सनकादि मनुष्य ) भिक्षुक और अतिथि इन पाँच देवताओं की पूजा करने से मनुष्य बहुत कीर्ति व पुण्य प्राप्त करता है ॥ ८० ॥

**पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि ।**
**मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ८१ ॥**

[अन्वयः] राजन्! यत्र यत्र गमिष्यसि (तत्र तत्र) मित्राणि, अमित्राः, मध्यस्थाः, उपजीव्योपजीविनः, [इमे] पञ्च त्वा अनुगमिष्यन्ति ॥

[ विग्रहः ] उपजीव्याश्च उपजीविनश्च-उपजीव्योपजीविनः ।

[ अर्थः ] राजन्!=हे नृपते!। यत्र यत्र=यस्मिन्यस्मिन्देशे। गमिष्यसि=त्वं यास्यसि। 'तत्र तत्र प्रदेशे' इति शेषः। मित्राणि=सुहृदः। अमित्राः=रिपवः। मध्यस्थाः=उदासीनाः। उपजीव्यो-

पजीविनः=आश्रयणीया गुर्वादयः, आश्रिताः सेवकादयश्च । [ इमे ] पञ्च । त्वा=त्वाम् । अनुगमिष्यन्ति=सहैव गमिष्यन्ति ।

[ भावार्थः ] यत्र मनुष्यो गच्छति तत्रैव तस्य मित्रादीनि स्वयमेव कार्यकारणभावेन भवन्तीति भावः ।

[ भाषाटीका ] जहाँ २ मनुष्य जाता है वहां २ मित्र, शत्रु, उदासीन, आश्रयदाता, गुरु आदि और आश्रित–नौकर चाकर ये–पाँच साथ ही लगे रहते हैं। अर्थात् जहाँ मनुष्य रहता है वहां पर ये पाँच भी स्वयं उपस्थित हो जाते हैं॥

**पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।**
**ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ८२ ॥**

[ अन्वयः ] पञ्चेन्द्रियस्य मर्त्यस्य एकम् इन्द्रियं छिद्रं चेत् ततः अस्य प्रज्ञा–दृतेः पात्रात् उदकम् इव–स्रवति ॥

[ विग्रहः ] पञ्च इन्द्रियाणि यस्यासौ पञ्चेन्द्रियः, तस्य पञ्चेन्द्रियस्य ।

[अर्थः]पञ्चेन्द्रियस्य=चक्षुरादिपञ्चेन्द्रियच्छिद्रशालिनः।मर्त्यस्य=पुंसः।एकम्=एकमपि।इन्द्रियम्=चक्षुरादिकमिन्द्रियम्।छिद्रं=छिद्रवत् । सच्छिद्रम् । अदान्तम् । अवशम् । चेत्=यदि स्यात् । तर्हि=ततः=तस्मादेव छिद्रात् । अस्य=पुंसः । प्रज्ञा=बुद्धिः । ज्ञानम् । दृतेः पात्रात्=चर्मपात्रात् । सच्छिद्रचर्मभाण्डात् । उदकमिव=जलमिव । स्रवति=विगलिता भवति । विनश्यति ।

[ भावार्थः ] पञ्चस्विन्द्रियेष्वेकमपीन्द्रियं विषयासक्तमस्वतन्त्रं चेत्सच्छिद्राच्चर्मपात्रादुदकमिव तेनैव छिद्रेण पुंसो ज्ञानं विनश्यति । अत इन्द्रियाणि वशे स्थाप्यानि ।

[ कोशः ] 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ।

[ भाषाटीका ] मनुष्य के शरीर में पाँच प्रवल इन्द्रियाँ (आँख, कान, नाक, जिह्वा, लिङ्ग ) छिद्रवत् हैं, इनमें से एक भी इन्द्रिय यदि विषयों में आसक्त हो तो उसी छिद्र ( रास्ते ) से मनुष्य की बुद्धि व ज्ञान वैसे ही नष्ट हो जाते हैं जैसे फटी हुई मसक से जल ॥ ८० ॥

**षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।**
**निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ८३ ॥**

[ अन्वयः ] इह भूतिम् इच्छता पुरुषेण—निद्रा, तन्द्रा, भयं, क्रोधः, आलस्यं, दीर्घसूत्रता [ इति ] षड् दोषा हातव्याः।

[ विग्रहः ] दीर्घसूत्रस्य भावः दीर्घसूत्रता।

[ अर्थः ] इह=जगति। भूतिम्=ऐश्वर्यम्। इच्छता=वाञ्छता। पुरुषेण=पुंसा। निद्रा=शयनम्। स्वापः। तन्द्रा=प्रमीला। भयं=साध्वसम्। क्रोधः=अमर्षः। आलस्यम्=अलसता। अनुत्साहः। दीर्घसूत्रता=मन्दक्रियता। [ इति=इमे ] षड् दोषाः=दूषणानि। हातव्याः=परित्याज्याः।

[ कोशः ] 'स्यान्निद्रा शयनं स्वापः' इत्यमरः। 'तन्द्री प्रमीला' इत्यमरः। 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः। 'कोपक्रोधामर्षरोषप्रतिघाः' इत्यमरः।

[ भाषाटीका ] इस जगत् में ऐश्वर्य व उन्नति चाहनेवाला मनुष्य—निद्रा, ऊँघना, डरना, क्रोध, आलस्य और काम ( कार्य ) करने में सुस्ती-इन छः दोषों को छोड़ दे ॥ ८३ ॥

**षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे।**
**अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ८४ ॥**
**अरक्षितारं राजानं, भार्यां चाऽप्रियवादिनीम्।**
**ग्रामकामं च गोपालं, वनकामं च नापितम् ॥ ८५ ॥**

[ अन्वयः ] अप्रवक्तारम् आचार्यम् अनधीयानम् ऋत्विजम्, अरक्षितारं राजानम्, अप्रियवादिनीम् भार्यांच, ग्रामकामं च गोपालं, वनकामं च नापितम्—इमान् षट् पुरुषः अर्णवे भिन्नां नावमिव जह्यात् ॥

[ विग्रहः ] न प्रवक्ता—अप्रवक्ता, तम्। अधीते इति अधीयानः, न अधीयानः अनधीयानः, तम्। न रक्षिता अरक्षिता, तम्। प्रियं वदति तच्छीला प्रियवादिनी, न प्रियवादिनी अप्रियवादिनी, ताम्। ग्रामं कामयते इति ग्रामकामः, तम्। वनं कामयते इति वनकामः, तम् वनकामम्।

[ अर्थः ] अप्रवक्तारम्=शास्त्रप्रवचनरहितम्। आचार्यं=शिक्षकम्। गुरुम्। अनधीयानम्=अपठन्तम्। स्वाध्यायरहितम्। ऋत्विजम्=याजकम्। अरक्षितारम्=अपालकम्। राजानं=

नृपतिम् । अप्रियवादिनीं=कटुभाषिणीम् । भार्याञ्च=पत्नीञ्च । तथा ग्रामकामञ्च=ग्रामासक्तञ्च । सर्वत्र ग्रामा एव स्युरिति ग्रामाभिलाषिणञ्च । ग्रामावासलम्पटं वा । गोपालं=गोपम् । वन-कामञ्च=वनासक्तञ्च । वनाभिलाषिणं वा । नापितं=दिवाकी-र्त्तिम् । इमान्=पूर्वोक्तान् । षट्=षट्संख्याकान् पुंसः । पुरुषः=बुद्धिमान्नरः । अर्णवे=सागरे । भग्नां=भिन्नाम् । नावमिव=तर-णिमिव । पोतमिव । जह्यात्=परित्यजेत् ।

[ कोशः ] 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । 'वृताः कुर्वन्ति ये यज्ञ-मृत्विजो याजकाश्च ते' इति कात्यः । 'क्षुरी' मुण्डी दिवाकीर्तिनापितान्ताव-सायिनः' इत्यमरः ।

[भाषाटीका] नहीं पढ़ानेवाले गुरु को, वेद न पढ़नेवाले ऋत्विक् को, प्रजा की रक्षा न करनेवाले राजा को, कटु वचन बोलनेवाली पत्नी को, गौवों की रक्षा करने के लिए जङ्गल में न जाकर गाँव में ही पड़े रहनेवाले ग्वाले को, गाँव में रहकर काम न करनेवाले व जङ्गल में घूमनेवाले नाई को (इन छै मनुष्यों को) उसी तरह छोड़ देना चाहिए जैसे टूटी हुई नाव को समुद्र में लोग छोड़ देते हैं ॥

**षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।**
**सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८६ ॥**

[ अन्वयः ] पुंसा सत्यं दानम् अनालस्यम् अनसूया क्षमा धृतिः, एते षट् एव तु गुणाः कदाचन न हातव्याः ॥

[अर्थः] पुंसा=पुरुषेण । सत्यं=सत्यभाषणम् । दानं=त्यागः । अनालस्यम्=पाटवम् । उत्साहः । कार्यकरणकौशलम् । अन-सूया=परगुणेष्वादरः । क्षमा=क्षान्तिः । धृतिः=धैर्यम् । एते षडेव तु गुणाः=षट्सङ्ख्याका गुणाः । कदाचन=कदापि । न हातव्याः=न परित्याज्याः ।

[ भाषाटीका ] मनुष्य को—सत्य, दान, उत्साह, दूसरों के गुणों की प्रशंसा ( दूसरे की निन्दा न करना ), क्षमा, और धैर्य—इन छै गुणों को कभी न छोड़ना चाहिए ॥ ८६ ॥

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकारी च विद्या
षड् जीवलोकस्य सुखानि राजन्! ॥ ८७ ॥

[ अन्वयः ] राजन्! नित्यम् अर्थागमः, अरोगिता च, प्रियवादिनी च प्रिया च भार्या, वश्यः पुत्रश्च, अर्थकरी विद्या च [ एतानि ] षट् जीवलोकस्य सुखानि ॥

[ विग्रहः ] अर्थस्य-आगमः अर्थागमः। न रोगी अरोगी, अरोगिणो भावः-अरोगिता। प्रियं वदति तच्छीला प्रियवादिनी। अर्थं करोति तद्धेतुः-अर्थकरी। जीवानां लोकः-जीवलोकः, तस्य। सुखयन्तीति सुखानि।

[ अर्थः ] राजन्=हे धृतराष्ट्र! नित्यम्=अजस्रं यथा स्यात्तथा। अर्थागमः=धनप्राप्तिः। अरोगिता च=स्वस्थता च। प्रियवादिनी=मधुरभाषिणी। कोमलालापा। प्रिया च=हृद्या च। भार्या=पत्नी। वश्यः=वशंवदः। पुत्रश्च=सुतश्च। अर्थकरी=धनकरी। विद्या च=कला च। [ एतानि षट् ] जीवलोकस्य=मर्त्यलोकस्य। भूलोकस्य। सुखानि=सुखदानि वस्तूनि। 'सन्ती'ति शेषः।

[ कोशः ] 'नित्याऽनवरताऽजस्रम्' इत्यमरः।

[ भाषाटीका ] हे राजन्! इस मर्त्यलोक में-निरन्तर धन की प्राप्ति, सुन्दर स्वास्थ्य, प्रियवादिनी प्रियपत्नी, आज्ञाकारी पुत्र, धनोपार्जन में सहायता देनेवाली विद्या ( कला कौशल आदि ) ये छै वस्तु सुख देनेवाली हैं। अर्थात् ये ६ बातें जिसे प्राप्त हैं वही सुखी है ॥ ८७ ॥

षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ८८ ॥

[अन्वयः] आत्मनि नित्यानां षण्णां यः विजितेन्द्रियः ऐश्वर्यम् अधिगच्छति सः पापैः न युज्यते। कुतः अनर्थैः ? [युज्यते]। (नैव युज्यते)।

[ विग्रहः ] विजितानि इन्द्रियाणि यस्य येन वा असौ विजितेन्द्रियः ।

[ अर्थः ] आत्मनि=स्वस्मिन् । स्वचित्ते । नित्यानां=नित्यं विद्यमानानाम् । षण्णां-काम-क्रोध-लोभ-मोह-मद-मात्सर्याणां षण्णाम् । यो विजितेन्द्रियः=निगृहीतेन्द्रियग्रामः पुमान् । ऐश्वर्यं= प्रभुत्वम् । निग्रहसामर्थ्यम् । अधिगच्छति=प्राप्नोति । कामक्रोधादिकं नियन्तुं शक्नोति । सः=स नरः । पापैः दोषैः । न युज्यते= न लिप्यते । कुतः=कुतो नु । अनर्थैः=विपत्तिभिः । क्लेशैश्च । 'युज्यते' इति शेषः । नैव क्लेशादिभिर्युज्यते-इति भावः ।

[ भाषाटीका ] जो मनुष्य अपनी इन्द्रियों को जीतकर अपने चित्त में सदा रहनेवाले काम क्रोध लोभ मोह मद मात्सर्य इन छै ६ शत्रुओं को वश में करता है वह कभी पाप से लिप्त नहीं होता, विपत्ति व क्लेश की तो बात ही क्या है ?। अर्थात् विपत्ति आदि तो उसके पास भी नहीं जाती ॥ ८८ ॥

**षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।**
**चौराः प्रमत्ते जीवन्ति, व्याधितेषु चिकित्सकाः ॥ ८९ ॥**
**प्रमदाः कामयानेषु, यजमानेषु याजकाः ।**
**राजा विवदमानेषु, नित्यं मूर्खेषु पण्डिताः ॥ ९० ॥**

[ अन्वयः ] [ वक्ष्यमाणाः ] इमे षट् [वक्ष्यमाणेषु] षट्सु जीवन्ति सप्तमो न उपलभ्यते । चौराः प्रमत्ते नित्यं जीवन्ति । व्याधितेषु चिकित्सकाः [ नित्यं जीवन्ति ] । प्रमदाः कामयानेषु [ नित्यं जीवन्ति ], याजकाः यजमानेषु [ नित्यं जीवन्ति ] । राजा विवदमानेषु [ नित्यं जीवति ] पण्डिताः मूर्खेषु [ नित्यं जीवन्ति ] ॥ ८९—९० ॥

[ विग्रहः ] कामयन्ते इति कामयानाः, तेषु । (छान्दसत्वान्मुगभावः) । यजन्ते इति यजमानाः, तेषु । विवदन्ते इति विवदमानाः, तेषु ।

[ अर्थः ] ( वक्ष्यमाणाः ) इमे षट्=चौरादयः षट् । ( वक्ष्यमाणेषु ) षट्सु=प्रमत्तादिषु षट्सु । जीवन्ति=प्राणन्ति । जीविकोपार्जनं कुर्वन्ति । सप्तमः-एतदन्यः । नोपलभ्यते=न दृश्यते । नैवास्ति । तथाहि-चौराः=तस्कराः । प्रमत्ते=असावधाने लोके ।

नित्यं जीवन्ति=सदा प्राणन्ति। व्याधितेषु=रोगिषु लोकेषु। चिकित्सकाः=वैद्याः। [नित्यं जीवन्ति=स्वयोगक्षेमं वहन्ति]। प्रमदाः=मत्तकाशिन्यः। सुन्दर्यः। गणिकाः। कामयानेषु=कामुकेषु [नित्यं जीवन्ति=सदा योगक्षेमं कुर्वन्ति ]। याजकाः-ऋत्विजः। यजमानेषु=यज्ञपरायणेषु यजमानेषु। [ नित्यं जीवन्ति=सर्वदा योगक्षेमं वहन्ति ]। राजा=नृपः। विवदमानेषु=कलहपरेषु लोकेषु। [ नित्यं = सर्वदा। जीवति=प्राणिति ]। पण्डिताः= विद्वांसः। मूर्खेषु=अज्ञेषु। [ नित्यं जीवन्ति=प्राणन्ति ]।

[भाषा] ये छै व्यक्ति इन छै व्यक्तियों के आधार से ही जीते हैं। सातवाँ कोई इनका आधार नहीं है। जैसे (१) असावधानों के कारण चोर जीते हैं।(२) रोगियों के कारण वैद्य जीते हैं। (३) कामी लोगों के कारण वेश्याएँ जीती हैं। (४) यजमानों के सहारे यज्ञ करानेवाले ब्राह्मण जीते हैं। (५) मुकदमेबाजों व लड़ाई झगड़ा करने वालों के सहारे राजा जीते हैं। (६) मूर्खों के सहारे पण्डित जीते हैं ॥८८-९०॥

**षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात्।**
**गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ९१ ॥**

[ अन्वयः ] गावः सेवा कृषिः भार्या विद्या वृषलसङ्गतिः—इमानि षट् मुहूर्त्तम् अनवेक्षणात् विनश्यन्ति।

[ विग्रहः ] न अवेक्षणम् अनवेक्षणम्, तस्मात् अनवेक्षणात्। वृषलस्य सङ्गतिः—वृषलसङ्गतिः।

[ अर्थः ] गावः=धेनवः। सेवा=राजधनिकादिशुश्रूषा। कृषिः=कृषिकर्म। भार्या=युवतिः पत्नी। विद्या=कलाः। वृषलसङ्गतिः=शूद्रमैत्री। नीचमैत्री। इमानि षट्=एतानि षट्। मुहूर्त्तं=क्षणमात्रमेव। अनवेक्षणात्=अनवलोकनात्। अपश्यं-वेणक्षात्। विनश्यन्ति=नश्यन्ति। विकृतिं भजन्ते।

[भाषाटीका] गौ, नौकरी, खेती, युवती स्त्री, विद्या, नीचों की सङ्गति (मित्रता) ये छै चीजें घड़ी भर नहीं सँभालने से भी नष्ट हो जाती हैं। अर्थात् इनसे सदा सावधान रहना चाहिए और हर समय इन्हें सम्हालते रहना चाहिए। और इनको कभी ढीला न छोड़ना चाहिए ॥ ९१ ॥

षडेत ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः, कृतदाराश्च मातरम् ॥९२॥
नारीं विगतकामास्तु, कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा, आतुराश्च चिकित्सकम् ॥ ९३ ॥

[ अन्वयः ] एते षट् हि पूर्वोपकारिणं नित्यम् अवमन्यन्ते, शिक्षिताः शिष्याः आचार्यम्, [ अवमन्यन्ते ], कृतदाराः च मातरम्, [ अवमन्यन्ते ], विगतकामास्तु नारीम् [ अवमन्यन्ते ], कृतार्थाः च प्रयोजकम् [ अवमन्यन्ते ], निस्तीर्णकान्ताराः नावम् [ अवमन्यन्ते, ] आतुराः च चिकित्सकम् [ अवमन्यन्ते ] ॥ ९२—९३ ॥

[ विग्रहः ] पूर्वमुपकरोति तच्छीलः पूर्वोपकारी । तम् । कृता दारा यैस्ते कृतदाराः । विगतः कामो येषान्ते विगतकामाः । कृता अर्था यैस्ते कृतार्थाः। प्रयोजयतीति प्रयोजकः, तम् । निस्तीर्णं कान्तारं यैस्ते निस्तीर्णकान्ताराः ।

[अर्थः] एते षट्=वक्ष्यमाणाः शिक्षिताद्याः षट् । हि=निश्चयेन । पूर्वोपकारिणं=कृतपूर्वोपकारम् आचार्यादिकम् । नित्यं=सर्वदैव । अवमन्यन्ते=उपेक्षन्ते । नाद्रियन्ते । तिरस्कुर्वन्ति । तथाहि–शिक्षिताः=अधीतविद्याः । अध्यापिताः । शिष्याः=छात्राः। आचार्यं=गुरुम् । उपदेष्टारम् [ अवमन्यन्ते ] । कृतदाराः=कृतदारपरिग्रहाः । विवाहिताः । मातरं=जननीम् । [अवमन्यन्ते] । विगतकामाः=निवृत्तरागाः । निवृत्तसुरतेच्छाः । शान्तकामोपभोगवासनाश्च । नारीं=स्त्रियम् । [अवमन्यन्ते] । कृतार्थाश्च=सिद्धार्थाश्च । सम्पन्नमनोरथाश्च । प्रयोजकं=कार्यसाधकम् । उपकारकम् ।[अवमन्यन्ते] । निस्तीर्णकान्ताराः=समुत्तीर्णदुर्गमजलादिमार्गाः।नावं=तरणिम् । सहायकञ्च । [अवमन्यन्ते] । आतुराश्च=रोगिणश्च । चिकित्सकं=वैद्यम् । 'अवमन्यन्ते' इति शेषः॥

[ कोशः ] 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः ।

[ भाषाटीका ] हे राजन् ! ये छै आदमी अपने उपकार करने वाले की उपेक्षा करते हैं और उन्हें अवश्य भूल जाते हैं । विद्या पढ लेने पर शिष्य अपने

गुरु की उपेक्षा करते हैं। विवाह हो जाने (बहू आ जाने) पर लड़के अपनी माता की उपेक्षा करते हैं। कामवासना की शान्ति हो जाने पर कामी लोग स्त्रियों की उपेक्षा करते हैं। कार्य की सिद्धि हो जाने पर लोग सहायक की उपेक्षा करते हैं। गहरे व बीहड़ स्थान से पार पहुँच जाने पर नाव एवं नाविक (मल्लाह) की उपेक्षा करते हैं। रोग दूर हो जाने पर वैद्य की उपेक्षा करते हैं। और उन्हें भूल जाते हैं ॥ ९२-९३ ॥

**आरोग्यमानृण्यमविप्रवासः**
**सद्भिर्मनुष्यैः सह सम्प्रयोगः।**
**स्वप्रत्यया वृत्तिरभीतवासः**
**षड् जीवलोकस्य सुखानि राजन्! ॥ ९४ ॥**

[अन्वयः] राजन्! आरोग्यम्, आनृण्यम्, अविप्रवासः, सद्भिः मनुष्यैः सह सम्प्रयोगः, स्वप्रत्यया वृत्तिः, अभीतवासः, [इमानि षट्] जीवलोकस्य सुखानि [भवन्ति] ॥ ९४ ॥

[विग्रहः] अरोगस्य भावः—आरोग्यम्। अनृणस्य भावः-आनृण्यम्। न विप्रवासः—अविप्रवासः। स्वमेव प्रत्ययो यस्यां सा स्वप्रत्यया। अभीतं वासः—अभीतवासः। जीवानां लोको जीवलोकः—तस्य जीवलोकस्य।

[अर्थः] राजन्=हे नृप। आरोग्यं=स्वास्थ्यम्। आनृण्यम्=ऋणाऽभावः।ऋणराहित्यम्। अविप्रवासः=परदेशगमनाऽभावः। स्वगृहेवासः। सद्भिः=साधुभिः। मनुष्यैः सह=पुरुषैः सह। सम्प्रयोगः=सङ्गतिः। मैत्री। स्वप्रत्यया=स्वाधीना च। वृत्तिः=जीविका। अभीतवासः=निर्भयं निवासः। [एतानि] षट्। जीवलोकस्य=मर्त्यलोकस्याऽस्य। सुखानि=सुखप्रदानि वस्तूनि सन्ति।

[कोशः] 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः।

[भाषाटीका] हे राजन्! इस संसार में—आरोग्य, किसी का ऋण (कर्ज) नहीं रहना, परदेश न जाना, सज्जनों की सङ्गति, स्वाधीन जीविका, निर्भय स्थान में रहना—ये छै सुख हैं ॥ ९४ ॥

**ईर्षुर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः ।**
**परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९५ ॥**

[ अन्वयः ] ईर्षुः, घृणी, नसन्तुष्टः, क्रोधनः, नित्यशङ्कितः, परभाग्योपजीवी च—एते षट् नित्यं दुःखिताः ( भवन्ति ) ॥

[ विग्रहः ] नित्यं शङ्कितः-नित्यशङ्कितः । परस्य भाग्यं-परभाग्यं, परभाग्यमुपजीवति तच्छीलः परभाग्योपजीवी । नित्यं दुःखितः-नित्यदुःखितः ।

[ अर्थः ] ईर्षुः=ईर्ष्यापरायणः । घृणी=दयापरः । घृणापरः । नसन्तुष्टः=सन्तोषरहितः । क्रोधनः=क्रोधी । नित्यशङ्कितः=नित्यं शङ्कापरायणः । परभाग्योपजीवी=अन्यभाग्योपजीवी । पराधीनः । एते षट्-नित्यदुःखिताः=सदा दुःखिताः । भवन्तीति शेषः ।

[ भाषाटीका ] दूसरे से ईर्ष्या व घृणा करने वाला, दयालु, असन्तोषी, क्रोधी, सदा सङ्का ( सन्देह ) करनेवाला, दूसरे के सहारे जीने वाला ( नौकर आदि ) ये ६ मनुष्य संसार में सदा ही दुःखी रहते हैं ॥ ९५ ॥

**सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।**
**प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ९६ ॥**
**स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।**
**महच्च दण्डदारुष्यमर्थदूषणमेव च ॥ ९७ ॥**

[ अन्वयः ] स्त्रियः अक्षाः मृगया पानं पञ्चमं वाक्पारुष्यं च, महत् च दण्डपारुष्यम्, अर्थदूषणम् एव च, व्यसनोदयाः [ एते ] सप्त दोषाः राज्ञा सदा हातव्याः यैः कृतमूलाः अपि ईश्वराः प्रायशः विनश्यन्ति ।

[ विग्रहः ] व्यसनस्य उदयो येभ्यः ते व्यसनोदयाः । कृतं मूलं यैस्ते कृतमूलाः । वाचः पारुष्यं वाक्पारुष्यम् ।

[ अर्थः ] स्त्रियः=सुन्दर्यः । वेश्याः । अक्षाः=पाशकाः । द्यूतक्रीडेति यावत् । मृगया=आखेटकम् । पानं=मद्यपानम् । पञ्चमं—वाक्पारुष्यं च=पञ्चमी क्रूरवाक्यता च । महच्च=नितरां दोषावहञ्च । दण्डपारुष्यं=कठोरदण्डदातृता च । कठोरो

दण्ड इति यावत् । अर्थदूषणम्=अन्यायेन प्रजाभ्यो धनस्य बलाद्धरणम् । वृथा व्ययश्च । व्यसनोदयाः=व्यसनप्रदाः । विपत्तिमूलभूताः । [एते] सप्त-दोषाः=दूषणानि । राज्ञा=नृपेण । सदा=सर्वदैव । हातव्याः-परिहरणीयाः । त्याज्याः । यैः= दोषैः । कृतमूला अपि=बद्धमूला अपि । सुदृढा अपि । ईश्वराः= राजानः । प्रायशः=बाहुल्येन । विनश्यन्ति=विलीयन्ते । विपत्ति-मनुभवन्ति ।

[ भाषाटीका ] राजा को चाहिए कि स्त्री, ( वेश्या ) जूवा, शिकार, मद्यपान, कडुवे वचन बोलना ( गाली देना ), कड़ा दण्ड देना और धन का दुरुपयोग या जबरदस्ती प्रजा से धन छीनना—ये जो सात विपत्ति के मूल महान् दोष हैं इनको छोड़ दे । क्योंकि इन दोषों से बड़े २ पराक्रमी राजा-जो दृढ मूल भी हैं—नष्ट हो जाते हैं ॥ ९६-९७ ॥

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि, ब्राह्मणैश्च विरुध्यते ॥ ९८ ॥
ब्राह्मणस्वानि चादत्ते, ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां, प्रशंसां नाभिनन्दति ॥ ९९ ॥
नैनान् स्मरति कृत्येषु, याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद्बुद्ध्वा विसर्जयेत् ॥ १०० ॥

[ अन्वयः ] विनशिष्यतः नरस्य अष्टौ पूर्वनिमित्तानि ( भवन्ति ) प्रथमं ब्राह्मणान् द्वेष्टि, ब्राह्मणैः च विरुध्यते, ब्राह्मणस्वानि च आदत्ते, ब्राह्मणान् च जिघांसति, एषां च निन्दया रमते, [ एषां ] प्रशंसां न अभि-नन्दति, कृत्येषु एनान् न स्मरति, याचितः च अभ्यसूयति । प्राज्ञः नरः एतान् दोषान् बुध्येत् , बुद्ध्वा च विसर्जयेत् ॥ ९८-१०० ॥

[ विग्रहः ] पूर्वभावीनि निमित्तानि पूर्वनिमित्तानि । ब्राह्मणानां स्वानि ब्राह्मणस्वानि । तानि ।

[ अर्थः ] विनशिष्यतः=विनाशं गमिष्यतः । विनाशोन्मु-

खस्य। नरस्य,-अष्टौ-पूर्वनिमित्तानि=पूर्वलक्षणानि। भवन्तीति शेषः। तान्येवाह-ब्राह्मणानिति। प्रथमम्=आदौ। ब्राह्मणान्= विप्रान्। द्वेष्टि=अभ्यसूयति। मनसाऽनिष्टमेषां चिन्तयति। ब्राह्मणैश्च=विप्रैश्च। विरुध्यते=विरोधं करोति। वैरायते। ब्राह्मणस्वानि च=ब्राह्मणधनानि च। आदत्ते=गृह्णाति। ब्राह्मणांश्च-जिघांसति=हन्तुमिच्छति। एषां च=विप्राणां च। निन्दया= निन्दां श्रुत्वा। रमते=प्रसन्नो भवति। [एषां] प्रशंसां=श्लाघां। नाभिनन्दति=नानुमन्यते। कृत्येषु=शुभाऽशुभेषु कार्येषु च। एनान्=ब्राह्मणान्। न स्मरति=न संस्मरति। याचितश्च=प्रार्थितश्च। अभ्यसूयति=दोषानाविष्करोति। तर्जयति। प्राज्ञः=बुद्धिमान्। नरः=पुरुषः। एतान्=पूर्वोक्तान्। दोषान्=दूषणानि। बुध्येत्=जानीयात्। बुद्ध्वा च=ज्ञात्वा च। विसर्जयेत्=परित्यजेत्।

[ भाषाटीका ] जिनका जल्दी ही विनाश होनेवाला है ऐसे मनुष्यों के आठ चिह्न होते हैं। १ ब्राह्मणों से द्वेष करना, २ ब्राह्मणों से विरोध करना, ३ ब्राह्मणों की सम्पत्ति को हड़प लेना, ४ ब्राह्मणों को मारने की इच्छा करना, ५ ब्राह्मणों की निन्दा से प्रसन्न होना, ६ ब्राह्मणों की प्रशंसा सुनकर नाक सिकोड़ना, व जल उठना, ७ काम पड़ने पर ब्राह्मणों को याद नहीं करना, ८ मांगने पर बुरी-भली बातें सुनाना, ('सण्ड मुसण्डा तो है, मेहनत क्यों नहीं करता' इत्यादि बुरे वाक्य कहना)। बुद्धिमान् मनुष्य इन आठ दोषों को तुरन्त छोड़ दे ॥ ९८-१०० ॥

**अष्टाविमानि हर्षस्य नवनीतानि भारत ! ।**
**वर्तमानानि दृश्यन्ते, तान्येव स्वसुखान्यपि[2] ॥ १०१ ॥**
**समागमश्च सखिभिर्महांश्चैव धनागमः ।**
**पुत्रेण च परिष्वङ्गः, सन्निपातश्च मैथुने ॥ १०२ ॥**
**समये च प्रियालापः, स्वयूथ्येषु समुन्नतिः ।**
**अभिप्रेतस्य लाभश्च, पूजा च जनसंसदि ॥ १०३ ॥**

---

१ द्वेष्टि=मनसा अनिष्टं चिन्तयति।
२ स्वःसुखान्यपीति पाठे-स्वर्गतुल्यसुखानीत्यर्थो बोध्यः।

[ अन्वयः ] भारत ! इमानि अष्टौ हर्षस्य नवनीतानि वर्त्तमानानि दृश्यन्ते, तान्येव स्वसुखानि अपि ( भवन्ति )। सखिभिः च समागमः, महान् चैव धनागमः, पुत्रेण च परिष्वङ्गः, मैथुने च सन्निपातः, समये च प्रियाऽऽलापः, स्वयूथ्येषु समुन्नतिः, अभिप्रेतस्य लाभः च, जनसंसदि पूजा च ॥

[अर्थः] भारत=हे भरतकुलोद्भव धृतराष्ट्र ! इमानि अष्टौ=वक्ष्यमाणान्यष्टौ। हर्षस्य=संमदस्य। आनन्दस्य। नवनीतानि=तत्तुल्यानि सारभूतानि। वर्त्तमानानि=समुपस्थितानि। दृश्यन्ते=प्रतीयन्ते। तान्येव=तान्येवाष्टौ च। स्वसुखान्यपि=आत्मसुखान्यपि।'भवन्ती'ति शेषः। सखिभिश्च=मित्रैश्च। समागमः=सङ्गमः। महांश्चैव=विपुलः। धनागमः=धनप्राप्तिः। पुत्रेण=सुतेन। परिष्वङ्गः=समाश्लेषः। मैथुने च=सुरते च। सन्निपातः=स्त्रिया सहैव शुक्रविसृष्टिः। समये च=काले च। उत्कण्ठायां च। अवसरे च। प्रियालापः=मधुरभाषणम्। स्वयूथ्येषु=स्ववर्ग्येषु। समुन्नतिः=उत्कर्षः। अभिप्रेतस्य=अभीष्टस्य वस्तुनः। लाभश्च=प्राप्तिश्च। जनसंसदि=जनसमाजे। पूजा च=सत्कारश्च। एतानि हर्षस्य सारभूतानीत्यर्थः।

[ भाषा० ] हे राजन्! मित्रों से मिलना, बहुत से द्रव्य की प्राप्ति, पुत्र का आलिङ्गन, मैथुन ( स्त्रीप्रसङ्ग ) में स्त्री की विसृष्टि के साथ ही साथ अपनी भी विसृष्टि ( वीर्य पतन ) होना, समय पर मीठे वचन, अपने बराबरी वालों में व अपनी जाति बिरादरी में उन्नति होना, अभीष्ट वस्तु का लाभ, जनसमाज में पूजा, ये बातें हर्ष व सुख की सार हैं। (अर्थात् ये अत्यन्त सुख देने वाली हैं)॥१०३॥

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाऽबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ १०४ ॥

[ अन्वयः ] प्रज्ञा च कौल्यं च दमः श्रुतं च पराक्रमः च अबहु-

भाषिता च, यथाशक्ति दानं, कृतज्ञता च, (-इमे ) अष्टौ गुणाः पुरुषं दीपयन्ति ॥ १०४ ॥

[ विग्रहः ] कुलस्य भावः-कौल्यम् । शक्तिमनतिक्रम्य यथाशक्ति । कृतं जानातीति कृतज्ञः, कृतज्ञस्य भावः-कृतज्ञता ।

**[अर्थः] प्रज्ञा च=बुद्धिश्च । कौल्यं च=कुलीनता च । दमः= इन्द्रियनिग्रहः । श्रुतं च = शास्त्राभ्यासश्च । पराक्रमश्च=पौरुषं च । अवहुभाषिता च=मितभाषिता च । यथाशक्ति=यथासम्भवम् । यथाबलं । दानञ्च=विसर्गश्च । कृतज्ञता च=कृतज्ञत्वं च । लोकोपकारस्मर्तृता च ।[-इमे] अष्टौ गुणाः=पाण्डित्यादयोऽष्टौ गुणाः । पुरुषं दीपयन्ति=प्रकाशयन्ति ।**

[ भाषा० ] बुद्धि, (बुद्धिमत्ता ) कुलीनता, इन्द्रियनिग्रह, विद्या, (पाण्डित्य) पराक्रम, कम बोलना, यथाशक्ति दान, कृतज्ञता, ये-आठ गुण मनुष्य को जगत् में प्रसिद्ध करते हैं ॥ १०४ ॥

**नवद्वार[1]मिदं वेश्म त्रिस्थूणं[2] पञ्चसाक्षि[3]कम् ।**
**क्षेत्रज्ञाधिष्ठितं[4] विद्वान् यो वेद स परः कविः ॥ १०५ ॥**

[ अन्वयः ] नवद्वारं त्रिस्थूणं पञ्चसाक्षिकं क्षेत्रज्ञाधिष्ठितम् इदं वेश्म यः विद्वान् वेद सः परः कविः ।

[विग्रहः] नव द्वाराण्यस्मिंस्तत्-नवद्वारम् । तिस्रः स्थूणाः यस्मिंस्तत् । पञ्च साक्षिणो यस्मिंस्तत्-पञ्चसाक्षिकम्[5] । क्षेत्रं जानातीति क्षेत्रज्ञः-क्षेत्रज्ञेनाधिष्ठितं-क्षेत्रज्ञाधिष्ठितम् ।

---

१ नवेति । श्रोत्रादिपञ्चकं, मनोबुद्ध्यहङ्काराः, स्थूलशरीरं चेति नव द्वाराणीव द्वाराणि विषयग्रहणमार्गा यस्मिंस्तत् ।

२ तिस्रःस्थूणा इव विधारकाः अविद्याकामकर्मरूपा यस्य तत् ।

३ पञ्च साक्षिवदुदासीनाः शब्दस्पर्शादयो विषया यस्मिंस्तत् ।

४ क्षेत्रज्ञेन चिदात्मना अधिष्ठितं-क्षेत्रं यो वेद स परः=श्रेष्ठः-कविः=ब्रह्मविदिति नीलकण्ठः ।

५ 'पञ्चभूमिक'मिति पाठेऽपि अयमेवार्थः ।

[अर्थ] नवद्वारं=चक्षुः-श्रोत्र-घ्राण-रसन-त्वगाख्यपञ्चेन्द्रियाणि, मनो-बुद्ध्यहङ्काराः-स्थूलशरीरञ्चेति नवद्वारघटितम्। त्रिस्थूणम्=अविद्या-काम-कर्मेति त्रिधारकविराजितम्। वातपित्तकफात्मकदोषत्रययुतं, सत्त्वरजस्तम इति त्रिगुणात्मकमिति वा। पञ्चसाक्षिकं=शब्दस्पर्शरूपरसगन्धाख्यपञ्चविषयग्राहकम्। क्षेत्रज्ञाधिष्ठितं=जीवात्माधिष्ठितम्। चिदात्मनाऽधिष्ठितम्। इदं वेश्म=शरीरम्। स्थूल-सूक्ष्मेति शरीरद्वयमिति तु नीलकण्ठः। यः विद्वान्=पण्डितः। वेद=जानाति, स परः=श्रेष्ठः। कविः= ब्रह्मवेत्ता। तत्त्वज्ञः। पण्डितराट्। भवतीति शेषः।

[भाषाटीका] इस मनुष्य शरीर में (आँख, कान, नाक, मुख, त्वक्, मन, बुद्धि, अहङ्कार, स्थूल शरीर) ये ९ दर्वाजे हैं। अविद्या काम कर्म ये तीन आधार स्तम्भ [धरण] हैं। रूप रस गन्ध स्पर्श शब्द ये पाँच विषय हैं, क्षेत्रज्ञ=(जीवात्मा) से अधिष्ठित हैं। इस मनुष्य के शरीर के [इस] तत्त्व को जो जानता है वही सच्चा पण्डित है ॥ १०५ ॥

**दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान्।**
**मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ १०६ ॥**
**त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश।**
**तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥ १०७ ॥**

[अन्वयः] धृतराष्ट्र ! दश धर्मं जानन्ति तान् निबोध। [तद्यथा] मत्तः, प्रमत्तः उन्मत्तः, श्रान्तः, क्रुधः, बुभुक्षितः, त्वरमाणः च, लुब्धः च, भीतः, कामी च ते दश [सन्ति], तस्मात्, एतेषु सर्वेषु पण्डितः न प्रसज्जेत ॥ १०६ ॥

[विग्रहः] बुभुक्षा सञ्जाताऽस्य-बुभुक्षितः। त्वरते इति त्वरमाणः।

[अर्थः] हे धृतराष्ट्र ! दश=दश इमे। धर्मं-न जानन्ति=धर्मतत्त्वं नावगच्छन्ति। तान्-निबोध=जानीहि। मत्तः=मदिरापानादिना मत्तः। प्रमत्तः=अनवहितः। विषयान्तरासक्ततयाऽनवहितचित्तः। उन्मत्तः=अपस्मारादिना, भूतावेशादिना च विक्षिप्तचित्तः।

श्रान्तः=परिश्रमखिन्नः । क्रुद्धः=कुपितः । बुभुक्षितः=क्षुधितः । त्वरमाणश्च=त्वरितश्च । लुब्धश्च=लोभाविष्टश्च । भीतः=भयातुरः । कामी च=कामातुरश्च । ते=एते-दश । भवन्तीति शेषः । तस्मात्= तस्माद्धेतोः । एतेषु=उक्तेषु दशसु । पण्डितः=विद्वान् । न प्रसज्जेत=न सम्बन्धं कुर्यात् । एते दूरतः परिहर्त्तव्या इत्यर्थः ।

[ भाषाटीका ] हे राजन् ! मदिरा आदि नशा पीनेवाला, कार्यान्तर व्यासक्त ( किसी झन्झट में फँसा हुआ ), पागल, थका हुआ, क्रुद्ध, भूखा, जल्दी करने- वाला, लोभी, डरपोक, कामातुर, ये दश व्यक्ति धर्म ( कर्त्तव्य अकर्त्तव्य, उचित अनुचित) को नहीं जानते, अतः इनसे व्यवहार न रखना चाहिए ॥१०६-१०७॥

**अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।**
**पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ १०८ ॥**

[ अन्वयः ] अत्रैव पुरातनम् सुधन्वना असुरेन्द्रेण पुत्रार्थं चैव गीतम् इमम् इतिहासम् उदाहरन्ति [ विद्वांसः ] ॥ १०८ ॥

[ अर्थ ] अत्रैव=अस्मिन्नेव विषये । पुरातनं=चिरन्तनम् । सुधन्वना=तन्नामकेन । असुरेन्द्रेण=राक्षसाधिपतिना । पुत्रार्थं चैव=स्वपुत्रोपदेशाय चैव । गीतं=कथितम् । इमं=वक्ष्यमाणम् । इतिहासं=पुरावृत्तं । कथोपदेशम् । उपदेशम् । उदाहरन्ति= निर्दिशन्ति । 'इतिहासविद' इति शेषः ॥

[ भाषा ] इस विषय में एक पुराना उपदेशपूर्ण इतिहास ( गाथाओं का प्रसङ्ग ) पण्डित लोग सुनाते हैं, जिसे राक्षसराज सुधन्वा ने अपने पुत्र को कहा था ॥ १०४ ॥

[ स्वपुत्रं प्रति सुधन्वोपदेशः— ]

**"यः काममन्यू प्रजहाति राजा**
**पात्रे प्रतिष्ठापयते धनं च ।**
**विशेषविच्छ्रुतवान् क्षिप्रकारी**
**तं सर्वलोकः कुरुते प्रमाणम् ॥ १०९ ॥**

[अन्वयः] यः राजा काममन्यू प्रजहाति, पात्रे धनं च प्रतिष्ठापयते, विशेषवित्, श्रुतवान्, क्षिप्रकारी [ भवति ] तं सर्वलोकः प्रमाणं कुरुते ॥

[ विग्रहः ] कामश्च मन्युश्च काममन्यू । तौ । क्षिप्रं करोति तच्छीलः- क्षिप्रकारी । विशेषं वेत्तीति विशेषवित् । सर्वो लोकः सर्वलोकः ।

[ अर्थः ] यः राजा=नृपः । काममन्यू=कामक्रोधौ । 'मन्युर्दैन्ये क्रतौ क्रुधी'त्यमरः । प्रजहाति=त्यजति । पात्रे=सत्पात्रे । धनं च=वित्तञ्च । प्रतिष्ठापयते=ददाति । विनियोजयति । विशेषवित्=तारतम्यज्ञः । विशेषज्ञः । श्रुतवान्=अभ्यस्तविद्यः । क्षिप्रकारी=शीघ्रकारी । कार्यपटुः । भवतीति शेषः । तं=तं नृपम् । सर्वलोकः=सर्वो जनः । प्रमाणं कुरुते=प्रमाणयति । आदर्शतया प्रमाणं करोति ।

[ भाषाटीका ] जो राजा काम क्रोध को छोड़ता है, सत्पात्र को दान देता है, ऊँच नीच समझता है, शास्त्रों का अभ्यास कर कुशलता प्राप्त करता है, कार्य करने में वृथा विलम्ब नहीं करता है उसे ही सब जनता अपना आदर्श व नेता मानती है ॥ १०९ ॥

जानाति विश्वासयितुं मनुष्या-
न्विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ ११० ॥

[ अन्वयः ] [यः पुमान् राजा वा] मनुष्यान् विश्वासयितुं जानाति, विज्ञातदोषेषु दण्डं दधाति, मात्रां च तथा क्षमां च जानाति, तादृशं तं समग्रा श्रीः जुषते ॥

[ विग्रहः ] विज्ञाता दोषा येषान्ते विज्ञातदोषाः, तेषु विज्ञातदोषेषु ।

[अर्थः] [यः=यः पुमान् राजा वा ] मनुष्यान्=मानवान् । विश्वासयितुं=स्वस्मिन् विश्वासमुत्पादयितुं । विस्रम्भयितुम् । जानाति=वेत्ति । विज्ञातदोषेषु=विदितापराधेषु । प्रकटाऽपराधेषु । दण्डं दधाति=दण्डेन शासनं करोति । मात्रां=दोषानुसारेण

दण्डप्रमाणम्। [ जानाति=वेत्ति ]। तथा=तथैव । क्षमां च= दण्डानर्हेषु क्षान्तिश्च । जानाति=वेत्ति । ताद्दशं=लोकानुरञ्जन-कुशलं युक्तदण्डम्। तं=राजानम्। समग्रा=सकला । श्रीः= लक्ष्मीः। जुषेत=सेवते।

[ भाषाटीका ] जो राजा—लोगों में विश्वास उत्पादन करना जानता है, दोषियों को यथोचित दण्ड देता है, किसको कितना दण्ड देना--यह जानता है। क्षमा के योग्य व्यक्तियों को क्षमा करता है उस राजा को सम्पूर्ण रूप से लक्ष्मी सेवन करती है ॥ ११० ॥

सुदुर्बलं नावजानाति कश्चि-
द्युक्तो रिपुं सेवते बुद्धिपूर्वम्।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ १११ ॥

[ अन्वयः ] यः सुदुर्बलं कञ्चित् न अवजानाति, युक्तः ( सन् ) रिपुं बुद्धिपूर्वं सेवते, बलस्थैः विग्रहं न रोचयते, काले च विक्रमते—सः धीरः ॥

[ विग्रहः ] बुद्धिः पूर्वा यस्मिन् कर्मणि तत्-बुद्धिपूर्वं यथा स्यात्तथा। बले तिष्ठन्तीति बलस्थाः, तैः बलस्थैः ।

[अर्थः] यः-सुदुर्बलं=नितरां निर्बलमपि। कञ्चित्=साधारण-मपि पुरुषम् ( शत्रुं वा)। नावजानाति=नतिरस्करोति। नोपेक्ष-ते । युक्तः=शत्रुच्छिद्रप्रेक्षणे सावधानः सन् । बुद्धिपूर्वं=बुद्धि-पूर्वकं। नीतिपुरस्सरम् । मन्त्रानुसारेण । [ यद्वा-युक्तः=बल-वता शत्रुणा अभियुक्तः सन् ]। रिपुं=शत्रुम्। सेवते=परिचरति, व्यवहरति वा । कालमपेक्षमाणः शत्रुमनुवर्त्तते इति वा। बलस्थैः=बलवद्भिः। विग्रहं=युद्धं । न रोचयते=न वाञ्छति। काले=अवसरे च समायाते। विक्रमते=पराक्रमं दर्शयति। सः-धीरः=पण्डितः। व्यवहारवित्।

[ भाषाटीका ] जो राजा किसी भी दुर्बल व साधारण मनुष्य का तिरस्कार नहीं करता, या साधारण शत्रु की भी उपेक्षा नहीं करता, शत्रु के साथ बडी

सावधानी से व्यवहार करता है, बलवान् से युद्ध नहीं करता है, ( शत्रु से हिल-मिल के किसी तरह दिन बिताता है और ) मौका आने पर पराक्रम दिखाता है वही पण्डित व धीर है ॥ १११ ॥

**प्राप्यापदं न व्यथते कदाचि-**
**दुद्योगमन्विच्छति चाऽप्रमत्तः ।**
**दुःखं च काले सहते महात्मा**
**धुरन्धरस्तस्य जिताः सपत्नाः ॥ ११२ ॥**

[ अन्वयः ] ( यः ) धुरन्धरः, महात्मा आपदं प्राप्य न व्यथते, अप्रमत्तः च उद्योगम् अन्विच्छति, काले दुःखं सहते, तस्य सपत्नाः जिताः ॥ ११२ ॥

[ विग्रहः ] न प्रमत्तः अप्रमत्तः । महांश्चासावात्मा च महात्मा । धुरं-धरतीति धुरन्धरः ।

[ अर्थः ] (यः) धुरन्धरः=कार्यभारवहनक्षमः । महात्मा=गम्भीराशयः । महानुभावः । आपदं=विपदं । प्राप्य=आसाद्या-ऽपि । न व्यथते=न बिभेति । न खिद्यते । अप्रमत्तश्च=सावधा-नश्च । उद्योगं=प्रयत्नम् । अन्विच्छति=आरभते । प्रवर्त्तयति । काले=विपत्तिसमये च । दुःखं=क्लेशम् । सहते=मर्षयति । तस्य=तस्य महात्मनः । सपत्नाः=शत्रवः । जिताः=विजिता एव । हतप्राया एव ।

[ भाषाटीका ] जो मनुष्य ( राजा ) कार्यभार धारण करने में समर्थ हो, गम्भीर प्रकृति हो, आपत्ति आने पर घबड़ाए नहीं, सावधानता से उद्योग करता रहे, समय पर आये हुए दुःख को धैर्य के साथ सहन कर उसके शत्रु शीघ्र ही नष्ट हो जाते हैं अर्थात् उसकी विजय निश्चित है ॥ ११२ ॥

**अनर्थकं विप्रवासं गृहेभ्यः,**
**पापैः सन्धिं, परदाराभिमर्शम् ।**
**दम्भं स्तैन्यं पैशुनं मद्यपानं**
**न सेवते यश्च सुखी सदैव ॥ ११३ ॥**

[ अन्वयः ] यः च अनर्थकं गृहेभ्यः विप्रवासं [ न सेवते ], पापैः सन्धिं [ न सेवते ], दाराभिमर्शं [ न सेवते ], दम्भं ( न सेवते ), स्तैन्यं पैशुनं मद्यपानं न सेवते (स) सदैव सुखी ( भवति ) ॥ ११३ ॥

[ विग्रहः ] नास्ति अर्थो यस्यासौ अनर्थकः, तम्। परस्य दाराणामभिमर्शः परदाराभिमर्शस्तम्। मद्यस्य पानं मद्यपानं, तत्। सुखमस्यास्तीति सुखी।

[ अर्थः ] यश्च-यश्च-पुमान्। अनर्थकं=व्यर्थम्। गृहेभ्यः=गेहेभ्यः। विप्रवासं=दूरदेशगमनं। ( न सेवते=न करोति )। पापैः=पापिभिः। सन्धिं=मैत्रीम्। ( न सेवते=न करोति )। परदाराभिमर्शं=परस्त्रीगमनं। (न सेवते=न करोति)। दम्भम्=आडम्बरम्। ( ढोंग ) (न सेवते=नालम्बते)। स्तेनस्य भावः-स्तैन्यं=चौर्यम्। पैशुनं=द्विजिह्वत्वम्। कर्णेजपत्वम्। मद्यपानं=सुरापानम्। न सेवते=न करोति। सः-पुमान्। सदैव=सर्वदैव। सुखी=सुखान्वितः। 'भवती'ति शेषः।

[ भाषा ] जो मनुष्य ( राजा ) व्यर्थ परदेश जाना, दुष्टों से सन्धि (मेल) परस्त्रीगमन, दम्भ ( ढोंग ), चोरी, चुगली, मद्यपान ( नशा पीना आदि ) का सेवन नहीं करता वह सदा सुखी रहता है ॥ ११२ ॥

**न संरम्भेणारभते त्रिवर्ग-**
**माकारितः शंसति तत्त्वमेव।**
**न मित्रार्थे रोचयते विवादं,**
**नाऽपूजितः कुप्यति चाप्यमूढः ॥ ११३ ॥**

[अन्वयः] अमूढः—संरम्भेण त्रिवर्गं न आरभते, आकारितः तत्त्वमेव शंसति, मित्रार्थे विवादं न रोचयते, अपूजितश्चाऽपि न कुप्यति ॥

[ विग्रहः ] त्रयाणां वर्गः-त्रिवर्गः, तम्। मित्रस्यार्थः मित्रार्थः,तस्मिन्। [ मित्रैस्यार्थे मित्रार्थे इति वा ] न मूढः-अमूढः। न पूजितः-अपूजितः।

[ अर्थः ] अमूढः=पण्डितः। संरम्भेण=आवेशेन। आग्रहेण। क्रोधेनेति नीलकण्ठः। त्रिवर्गं=धर्मार्थकामान्। तत्कार्य-

१ 'मात्रार्थे' इति कश्चित्पाठः। मात्रार्थे=स्वव्ययस्य कृते। अर्थे इत्यव्ययमपि।

मिति यावत् । नारभते=न प्रारभते । आकारितः=आहूतः सन् । पृष्टः सन् । तत्त्वमेव=यथार्थमेव । सत्यमेव । शंसति=कथयति । मित्रार्थे=सुहृत्कार्ये च । विवादं=कलहम् । न रोचयते=नेच्छति । अपूजितश्चापि=असत्कृतोऽपि । न कुप्यति=न कुप्यति । इमानि पण्डितस्य लक्षणानीत्यर्थः ।

[ कोशः ] 'त्रिवर्गो धर्मकामाऽर्थैः' इत्यमरः ।

[ भाषाटीका ] बुद्धिमान् मनुष्य—आवेग ( जल्दी बाजी ), व क्रोध से धर्म अर्थ काम सम्बन्धी कार्यों का प्रारम्भ नहीं करता है, किन्तु धीरज के साथ ही कार्य करता है, पूछने पर सत्य बात कहता है, मित्र के कार्य में (अथवा थोड़ी सी बातके लिये ) झगड़ा नहीं करता है, किसी के द्वारा अपना उचित सत्कार न किए जाने पर भी क्रोध नहीं करता है । ( -वही पण्डित है ) ॥ ११४ ॥

**न योऽभ्यसूयत्यनुकम्पते च**
**न दुर्बलः प्रातिभाव्यं करोति ।**
**नाऽत्याह किंचित्, क्षमते विवादं,**
**सर्वत्र तादृग्लभते प्रशंसाम् ॥**

[ अन्वयः ] यः न अभ्यसूयति, अनुकम्पते च, दुर्बलः प्रातिभाव्यं न करोति, किंचित् न अत्याह, विवादं क्षमते, तादृक् सर्वत्र प्रशंसां लभते ॥ ११५ ॥

[ विग्रहः ] प्रतिकूलो भावः-प्रतिभावः, तस्य भावः प्रतिभाव्यं, तत् । प्रतिभूः-मध्यस्थः, तस्य-प्रतिभुवो-भावः प्रातिभाव्यमिति तु गौडाः ।

[ अर्थः ] यः-नाभ्यसूयति=परगुणेषु दोषाऽऽविष्करणं न करोति । कस्यापि निन्दां न करोति । अनुकम्पते=दयां करोति । दुर्बलः=निर्बलः सन् । प्रातिभाव्यं=विरोधं । मध्यस्थतामिति तु गौडाः । किञ्चित्=किमपि । न अत्याह=न अतिक्रम्य ब्रूते । सगर्वं न विकत्थते । विवादं=कलहम् । क्षमते=सहते । न कलहं वर्द्धयति । तादृक्=तादृशः पुमान् । सर्वत्र=सर्वप्रदेशेषु । प्रशंसां । श्लाघां । लभते=प्राप्नोति ।

[ भाषाटीका ] जो किसी की निन्दा व किसीसे ईर्ष्या-डाह नहीं करता है। दीनों पर दया करता है। निर्बल होकर बलवान् से झगड़ा-नहीं करता है। ( या स्वयं कमजोर होते हुए दूसरे की मध्यस्थता-बिचवई-नहीं करता )। बढ़ २ कर बातें नहीं बोलता, कोई कुछ कह भी दे तो उसे सहन करता है पर व्यर्थ का झगडा नहीं बढाता है वह सब जगह प्रशंसित होता है ॥ ११५ ॥

**यो नोद्धतं कुरुते जातु वेषं**
**न पौरुषेणापि विकत्थतेऽन्यान् ।**
**न मूर्च्छितः कटुकान्याह किञ्चि-**
**त्प्रियं सदा तं कुरुते जनो हि ॥ ७७ ॥**

[ अन्वयः ] यः जातु उद्धतं वेषं न कुरुते, पौरुषेण अपि अन्यान् न विकत्थते, मूर्छितः किञ्चित् कटुकानि नाऽऽह, तं जनः सदा प्रियं कुरुते ॥

[ अर्थः ] यः—जातु=कदाचिदपि। उद्धतं=विकटम्। अत्युल्वणम्। वेषं=नेपथ्यम्। वेषरचनाम्। 'आकल्पवेषौ नेपथ्य'-मित्यमरः। न कुरुते=न विरचयति। पौरुषेणापि=पराक्रमेणापि हेतुना। अन्यान्=इतरान्। न विकत्थते=न निन्दति। मूर्च्छितः=मदान्धः सन्। गर्वितः सन्। व्याकुलोऽपि भूत्वेत्यन्ये। किञ्चित्=स्वल्पतमान्यपि। कटुकानि=कटुवचनानि। नाह=न ब्रूते। तं=तं पुरुषम्। जनः=लोकः। सदा=सर्वदा। प्रियं कुरुते=सुहृदं मन्यते।

[ भाषाटीका ] जो मनुष्य अपना वेष ज्यादा भडकीला न बनाकर सादा ही रखता है, अपने बल के घमण्ड में आकर किसी को कायर नहीं कहता है, किसी को कटु वचन नहीं कहता है, उसको सभी स्नेह ( प्यार ) करते हैं ॥ ११६ ॥

**न वैरमुद्दीपयति प्रशान्तं,**
**न दर्पमारोहति, नाऽस्तमेति ।**
**न दुर्गतोऽस्मीति करोत्यकार्यं**
**तमार्यशीलं परमाहुरार्याः ॥ ११७ ॥**

[ अन्वयः ] ( यः ) प्रशान्तं वैरं न उद्दीपयति, दर्पं न आरोहति, अस्तं न एति, दुर्गतोऽस्मि इति [ विभाव्य ] अकार्यं न करोति, तम् आर्याः परम् आर्यशीलम् आहुः ॥

[ विग्रहः ] आर्यं शीलं यस्यासौ आर्यशीलः, तम्—आर्यशीलम् ।

[ अर्थः ] यः=प्रशान्तम्=उपशान्तम् । म्लानिकृतम् । वैरं= विरोधं, शत्रुताम् । नोद्दीपयति=न वर्द्धयति । न नवीकरोति । दर्पं=गर्वम् । अहङ्कारम् । नारोहति=नाश्रयति । अस्तं=दैन्यं । नाशम् । ग्लानिम् । न एति=न गच्छति । दुर्गतोऽस्मीति=दरिद्रो विपन्नश्चास्मीति विभाव्य । अकार्यं=दुष्कर्म । पापम् । न करोति=नाचरति । तम्-तं नरम् । आर्याः=साधवः । शिष्टाः । परं=श्रेष्ठम् । आर्यशीलं=साधुचरितम् । आहुः=कथयन्ति ।

[ भाषाटीका ] जो शान्त हुए वैर को पुनः नहीं जगाता है, घमण्ड नहीं करता है, दीनता नहीं करता है, उदास नहीं होता है, 'मैं विपत्ति में हूँ' ऐसा सोच कर ( चोरी आदि ) बुरा काम नहीं करता है, उसे सज्जन लोग श्रेष्ठ व सुशील पुरुष कहते हैं ॥ ११७ ॥

न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुते च तापं
स कथ्यते 'सत्पुरुषार्यशीलः' ॥ ११८ ॥

[ अन्वयः ] ( यः— ) स्वे सुखे प्रहर्षं न वै कुरुते, अन्यस्य दुःखे प्रहृष्टः न भवति, दत्त्वा च पश्चात् तापं न कुरुते, सः सत्पुरुषार्यशीलः ( इति ) कथ्यते ॥ ११८ ॥

[ विग्रहः ] सँश्चासौ पुरुषश्च, सत्पुरुषः, आर्यं शीलं यस्यासौ आर्यशीलः, आर्याणामिव शीलं यस्येति वा । सत्पुरुषश्चासावार्यशीलश्च-सत्पुरुषार्यशीलः ।

[ अर्थः ] यः-स्वे=स्वकीये । सुखे=शर्मणि । प्रहर्षं=प्रकृष्टं हर्षं । प्रमोदम् । न वै=नैव । कुरुते=विदधत्ते । अन्यस्य= परस्य । शत्रोः । दुःखे=क्लेशे । प्रहृष्टः=प्रसन्नः । न भवति ।

दत्त्वा=कस्मैचित्किञ्चिद्दत्वा च । पश्चात्=तदनन्तरम् । तापम्=अनुतापम् । सन्तापम् । खेदम् । पश्चात्तापम् । न कुरुते=न करोति । सः=तादृशः पुमान् । सत्पुरुषार्यशीलः=सत्पुरुषः, साधुचरितश्च । ( इति ) कथ्यते= उच्यते ।

[ भाषाटीका ] जो मनुष्य अपने सुख में ज्यादा प्रसन्न नहीं होता है, एवं दूसरों के दुःख को देखकर भी प्रसन्न नहीं होता है, किसी को कुछ दान देकर पश्चात्ताप नहीं करता है उसे सज्जन लोग-सज्जन व सुशील व सदाचारी कहते हैं ॥ ११ ॥

**देशाचारान्समयाञ्जातिधर्मा-**
**न्बुभूषते यः स परावरज्ञः ।**
**स यत्र तत्राभिगतः सदैव**
**महाजनस्याधिपत्यं करोति ॥ ११९ ॥**

[ अन्वयः ] यः देशाचारान् समयान् जातिधर्मान् बुभूषते सः परावरज्ञः ( भवति ) । सः यत्र अभिगतः तत्र सदैव महाजनस्य आधिपत्यं करोति ॥

[ विग्रहः ] देशस्य आचाराः देशाचाराः, तान् देशाचारान् । जातीनां धर्माः-जातिधर्माः, तान् जातिधर्मान् । भवितुमिच्छति बुभूषते । छान्दसमात्मनेपदम् । चौरादिकस्य वा रूपम् । परश्चावरश्च परावरे, परावरे जानातीति-परावरज्ञः ।

[ अर्थः ] यः=यो नरः । देशाचारान्=तत्तद्देशभाषावेषान् । समयान्=तत्तद्देशभाषावेषादिविशेषादिविशेषान् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । जातिधर्मान्=तत्तज्जातिकुलधर्मान् । बुभूषते=यथावज्जिज्ञासते, ज्ञात्वा च तथाऽऽचरति । सः=तादृशो नरः । परावरज्ञः=सर्वव्यवहारवित् । पूर्वापरव्यवहारवित् । 'भवती'ति शेषः । स=स च । यत्र=यस्मिन् स्थाने । अभिगतः=प्राप्तः । तत्र=तत्रैव स्थाने । सदैव=सर्वदैव । महाजनस्य=जनसमुदायस्य । जनतायाः । श्रेष्ठ-

१ परावरज्ञः=उत्तमाधमविवेकवा'न्निति नीलकण्ठः ।

पुरुषाणामिति वा। आधिपत्यम्=नेतृत्वम्। प्रभुत्वम्। ऐश्वर्यम्। स्वाम्यम्। करोति=विधत्ते।

[ भाषाटीका ] जो मनुष्य-देशाचार, रूढ़ियां, देशभाषा, वेशभूषा, जाति व कुलों के आचार व व्यवहार आदि अच्छी तरह जानता व तदनुसार आचरण करता है, वह जहाँ जाता है वहीं जनता का नेतृत्व करता है व श्रेष्ठ लोगों में वह मुख्य माना जाता है ॥ ११९ ॥

दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम्।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान् वर्जयेत्स प्रधानः ॥१२०॥

[ अन्वयः ] यः प्रज्ञावान्—दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरं मत्तोन्मत्तैः दुर्जनैः च अपि वादं वर्जयेत् सः प्रधानः ( भवति ) ॥

[ विग्रहः ] प्रशस्ता प्रज्ञाऽस्त्यस्य प्रज्ञावान्। द्वेषो द्विष्टं, राज्ञो द्विष्टं-राजद्विष्टम्। तत्। पूगैः वैरं पूगवैरम्। तत्। पापं च तत्कृत्यं च पापकृत्यम्। तत्। मत्ताश्च उन्मत्ताश्च मत्तोन्मत्ताः, तैः मत्तोन्मत्तैः।

[ अर्थः ] यः प्रज्ञावान्=मतिमान्। दम्भं=वृथाडम्बरम्। परवञ्चनेच्छया धर्मानुष्ठानादिकम्। मोहम्=आसक्तिम्। मत्सरं=द्वेषम्। पापकृत्यं=पापकर्म। मारणमोहनवशीकरणादिकम्। राजद्विष्टं=राजद्रोहम्। पैशुनं=पैशुन्यम्। कर्णेजपत्वम्। पूगवैरं=बहुभिर्विरोधम्। समाजवैरं। सम्प्रदायविद्वेषम्। मत्तोन्मत्तैः=मदान्धविक्षिप्तैः। दुर्जनैश्चापि=दुष्टैश्चापि। वादं-विवादम्। वर्जयेत्=परिहरेत्। सः=स एव पुमान्। प्रधानः=पुरुषश्रेष्ठः। जातिकुलप्रधानम्। भवतीति शेषः।

[ भाषाटीका ] जो बुद्धिमान् मनुष्य ढोंग, आसक्ति ( आशिक मिजाजी ) दूसरे की उन्नति देखकर जलना, पापकर्म, राजा से विरोध, ( राजद्रोह ), चुगली, समाज व सम्प्रदाय से वैर, मदान्ध व पागल वॅ दुर्जनों से झगड़ा आदि नहीं करता है वही समाज में श्रेष्ठ व प्रधान होता है ॥ १२० ॥

दानं मोहं दैवतं मङ्गलानि
प्रायश्चित्तान्विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि
तस्योत्थानं देवता राधयन्ति ॥१२१॥

[ अन्वयः ] यः दानं मोहं दैवतं मङ्गलानि प्रायश्चितान् विविधान् लोकवादान्, एतानि नैत्यकानि कुरुते तस्य उत्थानं देवताः [ अपि ] राधयन्ति ॥

[ विग्रहः ] दैवतानामिदं दैवतम् । नित्यान्येव नित्यकानि, तान्येव नैत्यकानि । नित्यं भवानि नैत्यकानि वा । लोकानां वादाः लोकवादाः, तान् लोकवादान् ।

[ अर्थः ] यः—दानं=त्यागं । मोहं=स्नेहम् । प्रीतिम् । मोद-मिति पाठे=मोदम्=उत्सवं । प्रीतिदायादिकम् । दैवतं=दैवकृत्यं यात्रोत्सवादिकम् । मङ्गलानि=मङ्गलकृत्यानि शान्तिकपौष्टि-कानि । प्रायश्चित्तान्=प्रायश्चितानि । पापऽपनोदनानि कर्माणि अघमर्षणादीनि । विविधान्=नानाविधान् । लोकवादान्=लोकरू-ढिपरिपाटीप्राप्तानि कर्माणि । लोकानुरञ्जनपरान् गोष्ठीबन्धादीं-श्च । एतानि=पूर्वोक्तानि । नैत्यकानि=नित्यानि । नित्यम्भवानि वा । सर्वदा । कुरुते=करोति । तस्य=तस्य पुंसः । उत्थानम्= उन्नतिम् । देवाः=देवता अपि । राधयन्ति=साधयन्ति । कुर्वन्ति । इच्छन्तीति वा ।

[ भाषाटीका ] जो मनुष्य नित्य ही—दान, मित्रता, स्नेह, देवपूजा, मङ्गल-कृत्य ( हवन शान्ति आदि ) चान्द्रायण आदि प्रायश्चित्त, तथा और भी नाना प्रकार के लौकिक परम्परागत शुभ कार्यों ( रूढ़ियों ) को करता है, उसकी उन्नति देवता भी चाहते हैं, या देवता उसकी उन्नति करते हैं ॥ १२१ ॥

समैर्विवाहं कुरुते न हीनैः,
समैः सख्यं व्यवहारं कथां च ।

---

१ 'मोद'मिति परे पठन्ति ।

गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥ १२२ ॥

[ अन्वयः ] (यः) समैः विवाहं कुरुते, हीनैः न, समैः सख्यं व्यवहारं कथां च ( कुरुते न हीनैः ), यश्च गुणैः विशिष्टान् विपश्चितः पुरो दधाति, तस्य नयाः सुनीताः [श्रेयाः] ।

[ अर्थः ] यः—समैः=सदृशैः । तुल्यशीलैः । विवाहं=पाणिग्रहणादिसम्बन्धम् । कुरुते=करोति । हीनैः=नीचैः । न=नैव कुरुते । समैः=तुल्यैः सह । सख्युर्भावः कर्म वा सख्यं=मैत्रीम् । व्यवहारं=व्यापारम् । सम्बन्धम् । कथाञ्च=वार्तालापप्रेमालापादींश्च । 'कुरुते न हीनै'रिति शेषः । यश्च गुणैः=दयादाक्षिण्यादिभिर्गुणैश्च । विशिष्टान्=विख्यातान् गुणिनः । पुरः=अग्रे । दधाति=स्थापयति । तस्य=तस्य पुंसः । नयाः=मन्त्राः । नीतयः । सुनीताः=सुविचारिताः । सुप्रयुक्ताः । शोभनाः । श्रेया इति शेषः ।

[ भाषाटीका ] जो मनुष्य अपनी बराबरी वालों से ही विवाह आदि सम्बन्ध, तथा मित्रता, व्यवहार, बातचीत आदि करता है, हीन लोगों से नहीं, एवं गुणियों का आदर करता है—उसी की नीति ( कार्य या मन्त्र ) श्रेष्ठ है ॥ १२२ ॥

मितं भुङ्क्ते संविभज्याश्रितेभ्यो,
मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं-
स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ १२३ ॥

[ अन्वयः ] ( यः ) आश्रितेभ्यः संविभज्य मितं भुङ्क्ते, अमितं कर्म कृत्वा मितं स्वपिति, याचितः सन् अमित्रेषु अपि ददाति, तम् आत्मवन्तम् अनर्थाः प्रजहति ॥

[ अर्थः ] ( यः ) आश्रितेभ्यः=स्वाश्रितेभ्योऽनुजीविभ्यः । संविभज्य=यथावद्विभज्य । दत्त्वा । मितं=परिमितम् । स्वल्पम् । भुङ्क्ते=अश्नाति । किंच अमितं=विपुलम् । कर्म=कार्यं । कृत्वा=विधायापि च । मितं=स्वल्पमेव । स्वपिति=शेते । विश्राम्यति ।

किञ्च—याचितः सन्=प्रार्थितः सन्। अमित्रेष्वपि=शत्रुष्वपि। रिपुभ्योऽपि। ददाति=धनं साहाय्यं वा विसृजति। तम्-आत्मवन्तं=मनस्विनम्। धीरम्। अनर्थाः=अमङ्गलानि। विपत्तयः। प्रजहति=दूरतस्त्यजन्ति।

[ भाषाटीका ] जो मनुष्य अपने आश्रित—नौकर चाकर, भाई बन्धु आदि को बाँटकर ही अपने हिस्से के अनुसार थोडा खाता है, अधिक काम करके भी थोडी देर ही सोता ( विश्राम लेता ) है, माँगने पर शत्रुओं को भी (सहायता या धन) देता है उस महानुभाव के पास कभी विपत्ति नहीं आती ॥ १२३ ॥

चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किञ्चित्।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ १२४ ॥

[ अन्वयः ] यस्य चिकीर्षितं विप्रकृतं च किञ्चित् कर्म अन्ये जनाः न जानन्ति, मन्त्रे गुप्ते सम्यक् अनुष्ठिते च [ सति ] अस्य अल्पः अपि कश्चिदर्थः न च्यवति ॥

[ विग्रहः ] कर्त्तुमिष्टं चिकीर्षितम्। तत्।

[ अर्थः ] यस्य=यस्य पुंसः। चिकीर्षितं=कर्त्तुमिष्टम्। विप्रकृतं च=क्रियमाणञ्च। विरुद्धञ्चेत्यन्ये। किञ्चित्=किमपि। कर्म=कार्यम्। अन्ये=इतरे। जनाः=लोकाः। शत्रवश्च। न जानन्ति=न विदन्ति। मन्त्रे=नीतौ। विचारे। गुप्ते=सुगूढे। सम्यगनुष्ठिते च=यथावन्मन्त्रानुसारेण कार्ये कृते च। 'सती'ति शेषः। अस्य=अस्य राज्ञः, पुंसो वा। अल्पोऽपि=स्वल्पतमोऽपि। कश्चिदर्थः=किमपि प्रयोजनम्। न च्यवते=न विकृतो भवति। न विनश्यति। गूढमन्त्रस्य सर्वाणि कार्याणि सफलान्येव भवन्तीत्याशयः।

[ भाषाटीका ] मनुष्य जिस काम को करना चाहता हो या कर रहा हो उस काम को पूरा होने तक दूसरा न जाने, मन्त्र (विचार) बिलकुल गुप्त रहे, और काम

यही ध्यान व विधि विधान से किया जाए तो अवश्य ही सफलता प्राप्त होगी। कभी असफलता न होगी। अतः 'मन की बात व कर्त्तव्यकार्य-तब तक कोई न जाने जब तक वे हो न जाएँ-' ऐसा ध्यान रखना चाहिए ॥ १२४ ॥

**यः सर्वभूतप्रशमे निविष्टः**
**सत्यो मृदुर्मानकृच्छुद्धभावः।**
**अतीव स ज्ञायते ज्ञातिमध्ये**
**महामणिर्जात्य इव प्रसन्नः ॥ १२५ ॥**

[अन्वयः] यः सर्वभूतप्रशमे निविष्टः, सत्यः, मृदुः, मानकृत्, शुद्ध-भावः, सः ज्ञातिमध्ये जात्यः महामणिः इव अतीव प्रसन्नः ज्ञायते ॥

[ विग्रहः ] सर्वेषां भूतानां प्रशमः-सर्वभूतप्रशमः, तस्मिन्। मानं करोतीति मानकृत्। शुद्धो भावोऽस्य शुद्धभावः। ज्ञातीनां मध्यं, ज्ञातिमध्यं, तस्मिन् ज्ञातिमध्ये। महांश्चासौ मणिश्च महामणिः।

[ अर्थः ] यः=पुमान्। सर्वभूतप्रशमे=सकलप्राणिप्रशान्तौ। सर्वलोककल्याणे। निविष्टः=अभिनिविष्टः। तत्परः। सत्यः=सत्यवाक्। मृदुः=मृदुस्वभावः। मानकृत्=परेषां मानदः। शुद्धभावः=सरलाशयः। सः-ज्ञातिमध्ये=बन्धुमध्ये। जात्यः=श्रेष्ठः। श्रेष्ठाकरप्रसूतः। महामणिरिव=महार्हरत्नमिव। अतीव=नितराम्। प्रसन्नः-मणिपक्षे-स्वच्छः। निर्दोषः। पुरुषपक्षे-प्रसन्नः=निर्मलमानसः। तेजस्वी। ज्ञायते=लोकैः प्रतीयते।

[ भाषाटीका ] जो मनुष्य सब प्राणियों के कल्याण करने की चेष्टा करता है, जो सत्यभाषी, मृदु स्वभाव, दूसरे का संमान करने वाला व निष्कपट होता है वह अपनी जाति एवं समाज में अच्छी खान में उत्पन्न हुए श्रेष्ठ मणि (हीरे) की तरह अत्यन्त तेजस्वी व कान्तिमान् तथा प्रभावशाली माना जाता है ॥ १२५ ॥

**य आत्मनाऽपत्रपते भृशं नरः**
**स सर्वलोकस्य गुरुर्भवत्युत।**
**अनन्ततेजाः सुमनाः समाहितः**
**स तेजसा सूर्य इवावभासते ॥ १२६ ॥**

[ अन्वयः ] य नरः आत्मना भृशम् अपत्रपते, सः उत सर्वलोकस्य गुरुः भवति, सः अनन्ततेजाः सुमनाः समाहितः तेजसा सूर्य इव अवभासते ॥ १२६ ॥

[ विग्रहः ] सर्वो लोकः-सर्वलोकः, तस्य-सर्वलोकस्य । अनन्तं तेजो यस्यासौ अनन्ततेजाः । सुष्ठु मनो यस्यासौ सुमनाः ।

[ अर्थः ] यो नरः=यः पुमान् । आत्मना=स्वयमेव । स्वदोषं विदित्वा । भृशं=नितराम् । अत्यर्थम् । अपत्रपते=लज्जते । स्वनिन्दितकर्मभिः स्वयमेव लज्जितो भूत्वा तानि कर्माणि परिहरति । सः=स पुमान् । उत=निश्चयेन । उत इति वितर्के वा । सर्वलोकस्य=सकललोकस्य । गुरुः=मान्यः । अधिपश्च । भवति=जायते । किञ्च । सः=स पुमान् । अनन्ततेजाः=महाप्रभावः । अनन्तकान्तिः । सुमनाः=प्रसन्नमानसः । विशालहृदयः । समाहितः=सावधानः । किञ्च-तेजसा=कान्त्या । सूर्य इव=आदित्य इव । अवभासते=प्रकाशते ।

[ भाषाटीका ] जो मनुष्य अपने कामों की स्वयं परीक्षा करता है और अपने अनुचित कार्यों से स्वयं ही लज्जित हो उन्हें त्याग देता है वह मनुष्य सब लोगों में मान्य होता है । और वह लोक में अत्यन्त तेजस्वी प्रभावशाली व प्रसन्नमन हो सूर्य की तरह प्रकाशित होता है ॥ १२६ ॥

**वने जाताः शापदग्धस्य राज्ञः**
**पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।**
**त्वयैव बाला वर्द्धिताः शिक्षिताश्च**
**तवादेशं पालयन्त्याम्बिकेय ! ॥ १२७ ॥**

[ अन्वयः ] हे आम्बिकेय ! शापदग्धस्य पाण्डोः राज्ञः वने जाताः पञ्चेन्द्रकल्पाः पञ्च बालाः पुत्राः त्वया एव वर्द्धिताः शिक्षिताः च, तव आदेशं पालयन्ति ॥ १२७ ॥

[ विग्रहः ] शापेन दग्धः, शापदग्धः, तस्य शापदग्धस्य । पञ्च च ते इन्द्राः पञ्चेन्द्राः । ईषदसमाप्ताः पञ्चेन्द्राः पञ्चेन्द्रकल्पाः । अम्बिकाया अपत्यं पुमान् आम्बिकेयः । तत्सम्बुद्धौ हे आम्बिकेय ।

[अर्थः] आम्बिकेय=हे धृतराष्ट्र ! । शापदग्धस्य=मुनिशापोपहतस्य । पाण्डोः=पाण्डुनाम्नः । राज्ञः=नृपस्य । वने=अरण्ये । जाताः=उत्पन्नाः । पञ्चेन्द्रकल्पाः=पञ्चमहेन्द्रतुल्याः । पञ्च=पञ्चसङ्ख्याकाः । बालाः=शिशवः । पुत्राः । त्वयैव=भवतैव । वर्द्धिताः=पालिताः पोषिताश्च । शिक्षिताश्च=पाठिताश्च । अतः=तव=भवतः। आदेशम्=आज्ञाम् । निर्देशम् । पालयन्ति=शिरसा वहन्ति । इदानीं भवत आदेशं स्वभागविषयकं प्रतीक्षन्ते इति वा ।

[ भाषाटीका ] हे धृतराष्ट्र ! मुनि के शाप से मृत राजा पाण्डु के वन में उत्पन्न बालक पांच पुत्रों को–जो अब पांच इन्द्रों की तरह पराक्रमशाली हैं–उनको आपने ही पाला पोसा व पढ़ाया लिखाया है । वे भी आपकी आज्ञा को मानते हैं । (या वे अपने पतृक भाग के विषय में आपकी आज्ञा की प्रतीक्षा में बैठे हैं)॥

**प्रदायैषामुचितं तात ! राज्यं**
**सुखी पुत्रैः सहितो मोदमानः ।**
**न देवानां नापि च मानुषाणां**
**भविष्यसि त्वं तर्कणीयो नरेन्द्र ! ॥ १२८ ॥**

[ अन्वयः ] तात ! एषाम् उचितं राज्यं प्रदाय पुत्रैः सहितः मोदमानः सन् सुखी [ भव ] । नरेन्द्र ! (एवं ) त्वं न देवानां, नापि मानुषाणां च तर्कणीयः भविष्यसि ॥

[ अर्थः ] तात=हे राजन् ! एषां=पाण्डुपुत्राणाम् । उचितं=योग्यम् । पितृक्रमागतम् । राज्यं=राज्यभागम् । प्रदाय=दत्त्वा । पुत्रैः सहितः=सपुत्रः । मोदमानः=प्रहृष्टः सन् । सुखी=सुखान्वितः। भवेति शेषः । नरेन्द्र !=हे राजन् ! । [ एवं कृते सति-] त्वं-न देवानां=नैव देवतानाम् । नापि मानुषाणां च=नैव मनुष्याणाञ्च । तर्कणीयः=निन्दनीयः । शङ्कनीयः । समालोचनीयः । भविष्यसि ।

[ भाषाटीका ] हे तात ! उन पाण्डवों का उचित भाग देकर पुत्रों सहित आप प्रसन्न हो सुखपूर्वक राज्य का उपभोग कीजिए ! हे राजन् ! ऐसा करने से देवताओं में व मनुष्यों में भी आपकी अकीर्त्ति नहीं होगी ॥ १२८ ॥

इति व्याकरणन्यायाचार्यश्रीगुरुप्रसादशास्त्रिकृता विदुरनीतिटीका ।

# अथ द्वितीयोऽध्यायः ।

धृतराष्ट्र उवाच—

**जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।**
**तद्ब्रूहि त्वं हि नस्तात ! धर्मार्थकुशलो ह्यसि ॥ १ ॥**

[ अन्वयः ] तात ! जाग्रतः दह्यमानस्य ( मे ) यत् कार्यम् अनुपश्यसि तत् नः ब्रूहि । हि—त्वं धर्मार्थकुशलः असि ॥ १ ॥

[ अर्थः ] धृतराष्ट्रः=विदुरोक्तं श्रुत्वा राजा धृतराष्ट्रः । उवाच=विदुरम्प्रत्युवाच । तात=हे प्रिय विदुर ! । जाग्रतः=उन्निद्रस्य । किञ्च दह्यमानस्य=युधिष्ठिराशयाऽज्ञानाच्चिन्तया सन्तप्यमानस्य । ( मे=मम ) यत्कार्यं=यत्कल्याणकृत्कर्त्तव्यम् । अनुपश्यसि=युक्तमुत्पश्यसि । तत्=तत्कार्यम् । नः=अस्मान् प्रति । ब्रूहि=कथय । हि=यतः । त्वं=भवान् । धर्मार्थकुशलः=धर्मार्थोपदेशचतुरः । असि=भवसि ।

[ भाषाटीका ] तब धृतराष्ट्र ने विदुर जी से कहा—हे तात ! मुझे नींद नहीं आ रही है, और चिन्ता के मारे मैं जल रहा हूँ । मेरे लिए जो उचित कर्त्तव्य हो सो कहो । क्योंकि तुम धर्म और अर्थ के उपदेश में बड़े चतुर हो ॥ १ ॥

**त्वं मां यथावद्विदुर ! प्रशाधि**
**प्रज्ञापूर्वं सर्वमजातशत्रोः ।**
**यन्मन्यसे पथ्यमदीनसत्त्व !**
**श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २ ॥**

[ अन्वयः ] हे विदुर ! त्वम् अजातशत्रोः सर्वं मां यथावत् प्रज्ञापूर्वं प्रशाधि । हे अदीनसत्त्व ! कुरूणां श्रेयस्करं यत् पथ्यं मन्यसे, तत् वै ब्रूहि ।

[विग्रहः] प्रज्ञा पूर्वं यस्मिन्कर्मणि तत्प्रज्ञापूर्वं तद्यथा स्यात्तथा । न दीनम् अदीनम् , अदीनं सत्त्वं यस्यासौ अदीनसत्त्वः, तत्सम्बुद्धौ हे अदीनसत्त्व । न जातः शत्रुर्यस्यासौ अजातशत्रुः, तस्य । श्रेयः करोति तद्धेतुः श्रेयस्करम् ।

[ अर्थः ] हे विदुर ! त्वं=भवान् । अजातशत्रोः=युधिष्ठिरस्य ।

सर्वं=सकलम् । 'अभिप्राय'मिति शेषः । यथावत्=यथार्थम् । प्रज्ञापूर्वम्=बुद्धिपूर्वकं यथा स्यात्तथा । नितरां विचार्येति यावत् । प्रशाधि=उपदिश । यद्वा—अजातशत्रोः—बुद्धिपूर्वं=विचारपूर्वकं निर्णीतं, मन्त्रं-प्रशाधि । मह्यं विचार्य कथयेत्यर्थः । हे अदीनसत्त्व=हे महामते । अकुण्ठितबुद्धे । कुरूणां=कुरुकुलोत्पन्नानामस्माकम् । श्रेयस्करं=कल्याणकृत् । यत्-पथ्यं=हितावहम् । मन्यसे=विचारयसि । तद्धि=तदेव निश्चयेन । ब्रूहि=कथय ।

[ भाषाटीका ] हे विदुर ! युधिष्ठिर का क्या विचार है ? वह क्या करना चाहता है ?, इत्यादि बातें तुम विचार कर सब मुझसे कहो । क्योंकि तुम बुद्धिमान् हो और जिसमें हम कौरवों का कल्याण हो वही उपदेश दो ॥ २ ॥

पापाशङ्की पापमेवानुपश्य-
न्पृच्छामि त्वां व्याकुलेनात्मनाऽहम् ।
कवे ! तन्मे ब्रूहि सर्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ३ ॥

[ अन्वयः ] पापाशङ्की पापमेव अनुपश्यन् व्याकुलेन आत्मना अहं त्वां पृच्छामि, तत् हे कवे ! अजातशत्रोः सर्वं मनीषितं मे यथावत् सर्वं ब्रूहि ॥

[ विग्रहः ] पापमाशङ्कते तच्छीलः पापाशङ्की ।

[ अर्थः ] पापाशङ्की=अमङ्गलाशङ्की । पापमेव=अनिष्टमेव । स्वकृतं दुष्कृतमेव वा । अनुपश्यन्=वितर्कयन् । आशङ्कमानः । त्वां=भवन्तम् । व्याकुलेन=उद्विग्नेन । आत्मना=अन्तःकरणेन । मनसा । अहं=राजा धृतराष्ट्रः । पृच्छामि=आपृच्छे । तत्=तस्मात् । हे कवे=हे पण्डित । हे विचारचतुर विदुर । अजातशत्रोः= धर्मपुत्रस्य युधिष्ठिरस्य । [ यत् ] सर्वं=सकलम् । मनीषितं= विचारितम् । [ तत् ] मे=मह्यं । सर्वं=सकलम् । यथावत्=यथायथम् । आदित आरभ्य । ब्रूहि=कथय ।

[ भाषाटीका ] हे विदुर ! मुझे किसी बड़े अमङ्गल की आशङ्का हो रही है । मैं अनिष्ट ही अनिष्ट देख रहा हूँ । अतः मेरा चित्त बहुत व्याकुल है । मैं तुमसे

पूछता हूँ। युधिष्ठिर क्या करना चाहता है इत्यादि सब बात विचारपूर्वक मुझसे कहो ॥ ३ ॥

विदुर उवाच—

**शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम्।**
**अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ४ ॥**

[ अन्वयः ] अपृष्टः [ अपि ] यस्य पराभवं न इच्छेत् तस्य शुभं वा, यदि वा पापं, द्वेष्यं वा, यदि वा प्रियम् [ भवेत् ] तत् ब्रूयात् ॥

[ अर्थः ] [ यतः-यस्मात्कारणात् ] अपृष्टः=अकृतप्रश्नोऽपि। यस्य=पुंसः। पराभवं=पराजयं। नेच्छेत्=न वाञ्छेत्। तस्य=पुंसः। शुभं वा=मङ्गलं वा। यदि वा=अथवा। पापम्=अनिष्टम्। अमङ्गलं वा। द्वेष्यं वा=अप्रियं वा। यदि वा=अथवा। प्रियं=हृद्यमपि भवेत्। तत्=तदपि। तदेवेति वा। ब्रूयात्=कथयेत्। अभिदधीत।

[ भावार्थः ] यस्य शुभमिच्छेत्तस्मै हिताऽहितं सत्यं कथयेत्।

[ भाषाटीका ] विदुरजी बोले-मनुष्य जिसका हित चाहे उसको विना पूछे भी-शुभ या अशुभ, अच्छा या बुरा-जो ठीक हो उसे ठीक २ बता दे ॥ ४ ॥

**तस्माद्वक्ष्यामि ते राजन्! हितं यत्स्यात् कुरून्प्रति।**
**वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥**

[ अन्वयः ] हे राजन्! तस्मात् कुरून् प्रति यत् हितं स्यात् (तत्) ते वक्ष्यामि, श्रेयस्करं धर्म्यं वचः ब्रुवतः मे तत् निबोध ॥

[ अर्थः ] हे राजन्! तस्मात्-यस्माद्धितैषिणाऽपृष्टेनापि हितं वक्तव्यं तस्मात्। कुरून् प्रति=कौरवान् भवतः प्रति। सपुत्रं त्वां प्रति। यत्=यत्कार्यं। हितं=हितावहम्। स्यात्=भवेत्। तत्कार्यं-ते=तव। वक्ष्यामि=कथयिष्यामि। श्रेयस्करं=हितकृत्। कल्याणकरम्। धर्मादनपेतं-धर्म्यम्=धर्मानुगतम्। धर्मयुक्तम्। वचः=वाक्यम्। ब्रुवतः=कथयतः। मे=मम। मत्तः सकाशात्। तत्=तद्वचः। निबोध=जानीहि। सावधानः सन् शृणु।

( भाषाटीका ) हे राजन् ! आपका मैं हितैषी हूँ इसलिये मैं कौरवों ( आपलोगों ) के हित के लिये जो धर्मानुमोदित कल्याणकारी बातें हैं उन्हें कहता हूँ, ध्यान से सुनिए ॥ ५ ॥

**मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ! ।**
**अनुपायप्रयुक्तानि[1] मा स्म तेषु मनः कृथाः ॥ ६ ॥**

[ अन्वयः ] हे भारत ! मिथ्योपेतानि अनुपायप्रयुक्तानि यानि कर्माणि सिद्ध्येयुः, तेषु मनः मा स्म कृथाः ॥

[ विग्रहः ] मिथ्या उपेतानि-मिथ्योपेतानि । न उपाया अनुपायाः, तैः प्रयुक्तानि अनुपायप्रयुक्तानि ।

**[ अर्थः ] भारत=हे भारतवंशावतंस धृतराष्ट्र ! । मिथ्योपेतानि=कपटघटितानि । छलमूलानि । अनुपायप्रयुक्तानि=असदुपायप्रवर्त्तितानि । दुरभिसन्धिप्रयुक्तानि च । यानि कर्माणि=द्यूतचौर्यादीनि पापकर्माणि । सिद्ध्येयुः=दैवात्कथञ्चित्सिद्ध्येयुरपि । तेषु=कार्येषु । मनः=चित्तम् । मा स्म कृथाः=त्वं मा कुरु ।**

( भाषाटीका ) राजन् ! छल कपट धोखा आदि से युक्त, अनुचित उपायों से किए गए जो पापकार्य ( जूवा चोरी आदि ) हैं वे यदि कदाचित् सफल भी होते हों तो भी उनमें आप मन मत लगाइए ॥ ६ ॥

**तथैव योगविहितं यत्तु कर्म न सिध्यति ।**
**उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥**

[ अन्वयः ] तथैव-योगविहितम् उपाययुक्तम्-[अपि] यत् कर्म्म न सिध्यति मेधावी तत्र मनः न ग्लपयेत् ॥

[ विग्रहः ] योगेन विहितं योगविहितम् । उपायैर्युक्तम् उपाययुक्तम् । प्रशस्ता मेधाऽस्त्यस्य मेधावी ।

**[ अर्थः ] तथैव=एवमेव । किञ्च । योगविहितं=मनोयोगेन**

---

१ अनुपायप्रयुक्तानि—अनायासेनैव सिद्धिं लभमानान्यपि । ( बुरे कार्य विना परिश्रम ही सिद्ध होते हों तो भी उनमें मन मत लगाओ )।

कृतम् । नानायुक्तिकृतम् । उपाययुक्तं=परिश्रमनिष्पादितम् । नानाविधोपायैरनुष्ठितम् । यत्कर्म तु=यत्कार्यन्तु । न सिध्यति=न सिद्धिं गच्छति । सफलं न भवति । मेधावी=मतिमान् नरः । तत्र=तस्मिन् असिद्धे कर्मणि । मनः=चित्तम् । न ग्लपयेत्=न म्लापयेत् । तत्र खेदं न कुर्यात् ।

( भाषाटीका ) इसी तरह–बड़ी सावधानी से, नाना प्रकार के उपायों से किया गया भी अच्छा कार्य यदि दैववश सफल न हो तो भी मन को छोटा [उदास मन] न करना चाहिए । अर्थात् बुरे कामों को बिना परिश्रम जल्दी ही सफल होते देखकर एवं अच्छे कामों को बड़े परिश्रम से करने पर भी सफल न देखकर भी मन को उदास कभी मत करिए एवं उत्साह मत छोड़िए ॥ ७ ॥

**अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।**
**सम्प्रधार्य च कुर्वीत, न वेगेन समाचरेत् ॥ ८ ॥**

[ अन्वयः ] [ नरः—] सानुबन्धेषु कर्मसु अनुबन्धान् अपेक्षेत, सम्प्रधार्य च कुर्वीत, वेगेन न समाचरेत् ॥

[ विग्रहः ] अनुबन्धैः सहितानि सानुबन्धानि, तेषु सानुबन्धेषु ।

[ अर्थः ] नरः–सानुबन्धेषु=सप्रयोजनेषु । "कार्यान्तरापेक्षेषु । उपायसाध्येषु" इति तु गौडाः । कर्मसु=कार्येषु । अनुबन्धान्=प्रयोजनानि । 'अवान्तराणि प्रधानकार्यसहायककर्माणी'ति तु गौडाः । अपेक्षेत=पूर्वं निश्चिनुयात् । सम्प्रधार्य च=निश्चित्य च । कुर्वीत=कार्यं कुर्यात् । किन्तु–वेगेन=त्वरया । विचारमन्तरेण । 'सकलसहायकसामग्रीं विने'ति तु गौडाः । न समाचरेत्=कार्यं न कुर्यात् ।

(भाषाटीका) किन्तु किसी उद्देश्य से किए जाने वाले कार्यों के उद्देश्य (प्रयोजन) को ही पहिले खूब सोच समझकर तब कार्य प्रारम्भ करे । जल्दी से किसी काममें हाथ न डाले ( अथवा–जिस कार्य मे जिस अनुबन्ध–सहायक सामग्री–की आवश्यकता हो उस सामग्री को पूरी तरह जुटा के ही कार्य प्रारम्भ करे, जल्दी न करे ]॥८॥

**अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् ।**
**उत्थानमात्मनश्चैव धीरः कुर्वीत वा, न वा ॥९॥**

[ अन्वयः ] धीरः अनुबन्धं च, कर्मणां विपाकं चैव, आत्मनः उत्थानं चैव संप्रेक्ष्य कुर्वीत वा, न वा ( कुर्वीत ) ॥

[ अर्थः ] धीरः=धैर्यशाली विवेकशीलो नरः। अनुबन्धञ्च=प्रयोजनञ्च। उपायमिति वा। कर्मणां=कार्याणाम्। विपाकञ्चैव=परिणामञ्चैव। फलञ्चैव। आत्मनः=स्वस्य। उत्थानञ्चैव=उत्साहमुद्योगञ्चैव। सम्प्रेक्ष्य=पर्यालोच्य। विचार्य। [ कार्यं=कर्त्तव्य कर्म ]। कुर्वीत वा=सर्वसामग्रीसमवधाने सति विदधीत वा। नवा=सामग्रीविरहे नवा। कुर्वीतेति शेषः।

( भाषा ) विचारशील मनुष्य कर्त्तव्य कार्यों का प्रयोजन, परिणाम, अपनी शक्ति व उत्साह आदि सब विचार कर उचित समझे तो कार्य को प्रारम्भ करे, उचित न मालूम हो तो कार्य न करे ( अनुबन्ध=उपाय या प्रयोजन ) ॥ ९ ॥

**यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।**
**कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १० ॥**

[ अन्वयः ] यः स्थाने वृद्धौ तथा क्षये कोशे जनपदे दण्डे ( च ) प्रमाणं न जानाति सः राज्ये न अवतिष्ठते ॥

[अर्थः] यः-यो राजा। स्थाने=स्थितौ। दुर्गादौ च। वृद्धौ=उपचये, उन्नतौ, आये वा। तथा=तथैव। क्षये=अपचये। हानौ व्यये वा। कोशे=धनसञ्चये। जनपदे=देशविषये। दण्डे=सैन्ये च। प्रमाणं=मानम्। इयत्तां। न जानाति=न वेत्ति। सः-राजा। राज्ये=राष्ट्रे। राज्यसिंहासने। नावतिष्ठते=न स्थिरो भवति। तस्माद्राजसिंहासनात्पततीत्यर्थः।

गौडास्तु-यः कोशे जनपदे दण्डे-कोशादिविषये, किञ्च स्थाने वृद्धौ तथा क्षये=स्थितिवृद्धिह्रासानां प्रमाणं न जानातीत्यर्थं मन्यन्ते।

---

१ विपाकं-फलसिद्धावपि परिपाकम् ।
२ प्रमाणं=निश्चयसाधनम् । ३ स्थाने=दुर्गादौ ।

(भाषा) जो राजा अपने राज्य व किले की स्थिति (वर्तमान अवस्था) की वृद्धि व हानि की, तथा खजाना, प्रजा व सेना की स्थिति व उन्नति या त्रुटियों की ठीक ठीक मात्रा (आंकड़े) नहीं जानता वह राज्य पर स्थिर नहीं रह सकता। अर्थात् राजा को अपनी, खजाने की, प्रजा व सेना आदि की पूरी पूरी खबर रखनी चाहिये ॥१०॥

**यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति।**
**युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥**

[ अन्वयः ] यः तु एतानि यथोक्तानि प्रमाणानि अनुपश्यति, धर्मार्थयोः ज्ञाने युक्तः सः राज्यम् अधिगच्छति ॥

[ अर्थः ] यस्तु=यो राजा। एतानि यथोक्तानि=पूर्वोक्तानां स्थानवृद्ध्यादीनां-पूर्वोक्तानि। प्रमाणानि=मानानि। मात्राः। अनुपश्यति=तत्त्वतो जानाति। धर्मार्थयोः=अर्थधर्मयोः। ज्ञाने=बोधे। युक्तः=तत्परश्च। भवति। सः=राजा। राज्यं=राज्यासनम्। अधिगच्छति=निर्बाधमुपभुङ्क्ते। प्राप्नोति वा।

( भाषा ) और जो राजा अपने किले व महल आदि की स्थिति व आय व्यय की, तथा खजाना व सेना आदि की स्थिति व उन्नति व त्रुटियों को खूब अच्छी तरह जानता है वह राज्य का सदा उपभोग करता है ॥ ११ ॥

**न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतम्।**
**श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२ ॥**

[ अन्वयः ] राज्यं प्राप्तम् इत्येव असाम्प्रतं न वर्तितव्यम्। हि जरा उत्तमं रूपम् इव अविनयः श्रियं हन्ति ॥

[ अर्थः ] राज्यं=राष्ट्रम्। प्राप्तम्। अधिगतम्। इत्येव=इत्येतस्मात्कारणात्। इति कृत्वा। असाम्प्रतम्=अविनयेन। अयुक्तम्। अनुचितं यथा स्यात्तथा। न वर्तितव्यं=न व्यवहर्त्तव्यम्। हि=यतः। जरा=वार्द्धक्यम्। उत्तमं=श्रेष्ठं। सुन्दरम्। रूपमिव=आकारमिव। अविनयः=औद्धत्यम्। अयुक्ताचरणम्। श्रियं=राजलक्ष्मीम्। हन्ति=नाशयति।

---

१ एतानि=स्थानादिनिश्चायकानि। प्रमाणानि=लेख्यादीनि। (वही, रजिस्टर)।

( भाषाटीका ) 'अब तो मुझे राज्य मिल ही गया है, मेरा कोई क्या कर सकता है' ऐसा विचार कर अनुचित कार्य न करना चाहिए। क्योंकि जैसे बुढापा उत्तम रूप को नष्ट करता है वैसे ही अविनय भी सम्पत्ति को नष्ट कर देता है॥१२॥

**भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम्।**
**लोभाभिपाती ग्रसते, नानुबन्धमवेक्षते॥ १३॥**

[ अन्वयः ] लोभाभिपाती मत्स्यः भक्ष्योत्तमप्रतिच्छन्नम् आयसं बडिशं ग्रसते, अनुबन्धं न अवेक्षते॥

[ विग्रहः ] भक्ष्येषूत्तमं भक्ष्योत्तमं, तेन प्रतिच्छन्नं तत्तथाभूतम्। अयसो विकार आयसं, तत्। लोभेनाभिपतति तच्छीलः लोभाभिपाती।

[ अर्थः ] लोभाऽभिपाती=लोभात्प्रवर्त्तमानः। मत्स्यः= मीनः। भक्ष्योत्तमप्रतिच्छन्नं=श्रेष्ठभक्ष्यावृतम्। मधुरभक्ष्य-पिहितम्। आयसं=लौहम्। बडिशं=मत्स्यवेधनकण्टकम्। 'बडिशं मत्स्यवेधन'मित्यमरः। ग्रसते=निगिलति। किन्तु-अनु-बन्धं=परिणामम्। अनुपश्चाद्बन्धनमिति वा। नावेक्षते=न चिन्तयति। न पश्यति।

[ भाषाटीका ] लोभ से प्रवृत्त हुई मछली उत्तम खाद्य पदार्थ से छिपी हुई लोहे की कँटिया को निगल जाती है। परन्तु लोभ के कारण उसके परिणाम ( पकडे जाने व मारे जाने ) को नहीं देखती है॥ १३॥

**यच्छक्यं ग्रसितुं ग्रस्यं, ग्रस्तं परिणमेच्च यत्।**
**हितं च परिणामे यत्तदाद्यं भूतिमिच्छता॥ १४॥**

[ अन्वयः ] भूतिमिच्छता—यत् ग्रस्यं ग्रसितुं शक्यं, यत् ग्रस्तं सत् परिणमेत् च, परिणामे च यत् हितं [ भवेत् ] तत् आद्यम्॥

[अर्थः] भूतिम्=ऐश्वर्यम्। इच्छता=वाञ्छता। पुंसा। यत् ग्रस्यं=भक्ष्यं मोदकादि। ग्रसितुं शक्यं=भक्षयितुं शक्यम्। यत् भक्ष्यं। ग्रस्तं=भुक्तं सत्। परिणमेच्च=परिपाकं गच्छेच्च। जीर्येत्। परिणामे च=परिपाके च। फलसमये च। यत्=यद्भक्ष्यम्। हितं =हितकारकं भवेत्। तत्=तदेव ग्रस्यम्। आद्यं=भक्षणीयम्।

( भाषाटीका ) जो वस्तु खाई जासके, खाने पर जो पच सके, पचने पर भी जो हितकारक हो वही वस्तु हित चाहने वाले मनुष्य को खानी चाहिए॥१४॥

**वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।**
**स नाप्नोति रसं तेभ्यो बीजं चाऽस्य विनश्यति ॥ १५ ॥**

[ अन्वयः ] यः वनस्पतेः अपक्वानि फलानि प्रचिनोति सः तेभ्यः रसं न आप्नोति, अस्य बीजं च विनश्यति ॥ १५ ॥

[अर्थः] यः-पुमान् । वनस्पतेः=आम्रादिवृक्षात् । वृक्षस्येति वा । न पक्वानि=अपक्वानि=परिपाकमप्राप्तानि । फलानि=आम्रादिफलानि । प्रचिनोति=सङ्गृह्णाति । सः-पुमान् । तेभ्यः=फलेभ्यः । रसम्=आस्वादम् । अन्तःस्थितं रसनीयं वस्तु वा । नाप्नोति=न प्राप्नोति । च=किञ्च । अस्य=वृक्षस्य । पुंसो वा । बीजं=बीजमपि । विनश्यति=नाशमुपयाति ।

( भाषाटीका ) जो मनुष्य आम जामुन आदि वृक्षों के कच्चे ही फलों को तोड़ता है उसे उन फलों से कुछ भी रस ( स्वाद ) नहीं मिलता है, और वृक्ष का बीज भी व्यर्थ ही नष्ट हो जाता है ॥ १५ ॥

**यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।**
**फलाद्रसं स लभते, बीजाच्चैव फलं पुनः ॥ १६ ॥**

[ अन्वयः ] यः तु काले परिणतं पक्वं फलम् उपादत्ते, सः फलात् रसं लभते, बीजात् चैव पुनः फलम् [ लभते ] ॥

[ अर्थः ] यस्तु=यो वै पुरुषः । काले=परिपाककाले । फलादानोचितकाले वा । परिणतं=परिणामं प्राप्तम् । अत एव-पक्वं=परिपक्वम् । फलम्=आम्रादिकम् । उपादत्ते=गृह्णाति । प्रचिनोति । सः=पुमान् । फलात्-आम्रादेः । रसम्=आस्वादम् । रसं च । लभते=आसादयति । बीजाच्चैव=आम्रादिमध्यस्थाद्बीजाच्चैव । पुनः=पुनरपि । फलम्=आम्रादिकम् । 'लभते' इति शेषः ।

( भाषा ) (परन्तु) जो मनुष्य समय पर पके हुए फल को तोड़ता है उसे उस फल का रस (स्वाद) भी मिलता है, और बची हुई गुठली से पुनः आम का वृक्ष उत्पन्न होता है और वह भी फल देता है ॥ १६ ॥

**यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।**
**तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७ ॥**

[ अन्वयः ] यथा षट्पदः पुष्पाणि रक्षन् मधु समादत्ते तद्वत् ( राजाऽपि ) अविहिंसया मनुष्येभ्यः आदद्यात् ॥

[ अर्थः ] यथा=येन प्रकारेण । यथैव । षट् पदान्यस्यासौ षट्पदः = भ्रमरः । 'षट्पदभ्रमराऽलयः' इत्यमरः । पुष्पाणि= मालत्यादिकुसुमानि । रक्षन्=अविनाशयन्नेव । मधु=मकरन्दं । पुष्परसम् । 'मधु मद्ये पुष्परसे' इत्यमरः । समादत्ते=पुष्पेभ्यः सञ्चिनोति । तद्वत्=तथैव । [ राजाऽपि ] अविहिंसया=प्रजानामपीडनेनैव । अक्लेशेनैव । मनुष्येभ्यः=मनुजेभ्यः । प्रजाभ्यः । अर्थान्=धनानि । आदद्यात्=संगृह्णीयात् ।

( भाषा ) जैसे भ्रमर ( भौंरा ) फूलों को हानि पहुँचाए विना ही थोड़ा थोड़ा करके पुष्परस ( मधु ) इकट्ठा करता है, वैसे ही राजा को चाहिये कि वह भी प्रजा को पीड़ा पहुँचाय विना ही प्रजा से धन संग्रह करे ॥ १७ ॥

**पुष्पं पुष्पं विचिन्वीत, मूलच्छेदं न कारयेत् ।**
**मालाकार इवाऽऽरामे, न यथाऽङ्गारकारकः ॥१८॥**

[ अन्वयः ] आरामे मालाकारः इव पुष्पं पुष्पं विचिन्वीत, अङ्गारकारकः यथा—मूलच्छेदं न कारयेत् ॥ १८ ॥

[ विग्रहः ] मालां करोतीति मालाकारः । मूलस्य च्छेदः मूलच्छेदः, तम् मूलच्छेदम् । अङ्गारान् करोति अङ्गारकारकः ।

[अर्थः] आरामे=उपवने । 'आरामः स्यादुपवन'मित्यमरः । मालाकार इव=माल्यकारक इव । 'माल्यं मालास्रजौ'इत्यमरः । पुष्पं पुष्पं=प्रत्येकं पुष्पम् । विचिन्वीत=सञ्चिन्वीत । आददीत । प्रत्येकं कुसुमानां सञ्चयं कुर्यात् । किन्तु अङ्गारकारको यथा= इङ्गालकारक इव । मूलच्छेदं = समूलच्छेदम् । न कारयेत्= नैव कुर्यात् ।

[ भावार्थः ] यथोपवने मालाकारः प्रत्येकं पादपेभ्यः एकैकं कृत्वा पुष्पाणि गृह्णाति, न पादपमेवोन्मूल्यं पुष्पाणि गृह्णाति, एवमेव राज्ञा प्रजाभ्यो धनं ग्राह्यम् । अङ्गारकारको यथा वृक्षान् समूलं दग्ध्वा विनाशयति एवं राज्ञा प्रजाविनाशो नैव कार्यः ।

( भाषाटीका ) जैसे बगीचे में माली एक २ करके फूल तोडता है वैसे ही राजा को प्रजा से धन लेना चाहिए, परन्तु जैसे कोयला बनाने वाला वृक्षों को जड से काटकर जला डालता है वैसे राजा को नहीं करना चाहिये ॥१८॥

**किन्नु मे स्यादिदं कृत्वा, किन्नु मे स्यादकुर्वतः ।**
**इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो, न वा ॥ १९ ॥**

[ अन्वयः ] 'इदं कृत्वा मे किन्नु स्यात्,' 'अकुर्वतः मे किन्नु स्यात्,' इति कर्माणि संचिन्त्य पुरुषः कुर्यात् वा, नवा ( कुर्यात् ) ॥

[ अर्थः ] इदम्=एतत् । कृत्वा=विधाय । मे=मम । किंनु=किंस्वित् । स्यात्=भवेत् । अकुर्वतः=इदङ्कार्यमकुर्वतश्च । मे=मम । किंनु=किं खलु । स्यात्=किं भवेत् । इति=इत्थम् । कर्माणि=कार्याणि । सञ्चिन्त्य=विचार्य । पुरुषः=पुमान् । कुर्याद्वा=कार्यं विदधीत वा । नवा=नैव वा कुर्यात् । उचितं कार्यं कार्यमनुचितं न कार्यमित्याशयः ।

(भाषाटीका) राजा (मनुष्यों) को चाहिये कि-इस काम के करने से मेरा क्या लाभ है, न करने से क्या हानि है-यह पहिले ही से खूब सोचकर तब उचित समझे तो उस काम को करे, नहीं तो न करे ॥ १९ ॥

**अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।**
**कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ २० ॥**

[ अन्वयः ] केचित् अर्था नित्यम् अनारभ्या भवन्ति । तथा अगताः [ अनारभ्या भवन्ति ], येषु हि कृतः पुरुषकारः निरर्थको भवेत् ।

[ विग्रहः ] करणं कारः । पुरुषस्य कारः पुरुषकारः । न आरभ्याः अनारभ्याः । न गताः-अगताः ॥

[ अर्थः ] केचित्=केचन । अर्थाः=प्रबलविरोधादयः । नित्यम्=सर्वथा । अनारभ्याः=आरम्भानर्हा भवन्ति । तथा=तथैव । अगताः=कदापि अप्राप्ताः । कर्तुमशक्याः शशश्रृङ्गानयनादयः [ अनारभ्या भवन्ति ] । येषु हि=अशक्येषु चन्द्रानयनाद्यर्थेषु हि । कृतः=विहितः । पुरुषकारः=पुरुषार्थः । निरर्थकः=व्यर्थः । भवेत्=स्यात् । केचित्तु नित्यं तथा अगताः-

क्वचन प्राप्तुमशक्याः, केचिदर्थाः—बलवद्विरोधादयोऽनारभ्या इत्येवमर्थमाहुः ।

(भाषाटीका) कुछ कार्य तो ऐसे होते हैं जो कभी न करने चाहिए-जैसे बलवान् से विरोध। कुछ कार्य ऐसे हैं जो कभी हो ही नहीं सकते, और उन कार्यों में उद्योग निरर्थक ही होता है-जैसे आकाश के फूल तोड़ कर लाना ॥२०॥

**प्रसादो निष्फलो यस्य, क्रोधश्चापि निरर्थकः ।**
**न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ २१ ॥**

[ अन्वयः ] यस्य प्रसादः निष्फलः, क्रोधः चापि निरर्थकः (भवति) स्त्रियः षण्ढं पतिम् इव ( प्रजाः ) तं भर्त्तारं न इच्छन्ति ॥

[ अर्थः ] यस्य=यस्य राज्ञः । प्रसादः=प्रसन्नता । 'प्रसादस्तु प्रसन्नता'इत्यमरः । निष्फलः=निरर्थको भवति । क्रोधश्चापि=कोपश्चापि । निरर्थकः=निष्फलो भवति । स्त्रियः=योषितः । षण्ढं=नपुंसकम् । पतिमिव=भर्त्तारमिव । [ प्रजाः-] तं भर्त्तारं=निष्फलप्रसादक्रोधं राजानम् । नेच्छन्ति=न वाञ्छन्ति । नानुमन्यन्ते । नाद्रियन्ते ।

(भाषा) जिसकी प्रसन्नता से कुछ लाभ नहीं हो, क्रोध से कुछ हानि भी न हो उस राजा को प्रजा वसी तरह नहीं चाहती है जैसे स्त्रियां नपुंसक पति को।.२१।

**कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।**
**क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥ २२ ॥**

[ अन्वयः ] प्राज्ञः नरः लघुमूलान् कांश्चित् अर्थान् कर्तुम् क्षिप्रं आरभते, तादृशान् न विघ्नयति ॥

[ विग्रहः ] प्रकर्षेण जानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः । लघूनि मूलानि येषान्ते लघूमूलाः, तान् । महान्ति फलानि येषान्ते महाफलाः, तान् ।

[ अर्थः ] प्राज्ञः=बुद्धिमान् । नरः=पुमान् । लघुमूलान्=स्वल्पोपायसाध्यान् । महाफलान्=महाफलदान् । विपुलार्थप्रदान् । अर्थान्=कार्याणि । क्षिप्रं=द्रुतम् । 'लघु क्षिप्रमरं द्रुत'मित्यमरः । कर्त्तुं=विधातुम् । आरभते=प्रारभते । तादृशान्=स्वल्पायाससाध्यान् महाफलान् । न विघ्नयति=न विलम्बयति ।

( भाषा ) जिन कार्यों में परिश्रम थोड़ा हो पर लाभ खूब हो उनको बुद्धिमान् लोग तुरन्त करते हैं, उनमें देरी नहीं करते हैं ॥ २२ ॥

**ऋजु पश्यति यः सर्वं चक्षुषाऽनुपिबन्निव ।**
**आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २३ ॥**

[ अन्वयः ] यः चक्षुषा अनुपिबन् इव सर्वम् ऋजु पश्यति, प्रजाः तूष्णीकम् आसीनम् अपि अनुरज्यन्ति ॥

[ अर्थः ] यः=यो राजा । चक्षुषा=स्निग्धया दृष्ट्या । सानुरागेण प्रसन्नेन नेत्रेण । अनुपिबन्निव=लिहन्निव । सर्वं=सकलंजनम् । ऋजु=अकपटं यथा स्यात्तथा । सस्नेहम् । पश्यति=विलोकयति । प्रजाः=जनाः । तूष्णीमेव तूष्णीकं=मौनम् । आसीनं=स्थितमपि । तं=तादृशं राजानम् । अनुरज्यन्ति=प्रसीदन्ति ।

( भाषा ) जो राजा प्रसन्न नेत्रों से निष्कपट भाव से अपनी प्रजा को देखता है उस राजा पर-चाहे वह अपने मुख से कुछ भी न कहे-प्रजा पूर्ण अनुरक्त रहती है ।

**सुपुष्पितः[1] स्यादफलः, फलितः स्याद्दुरारुहः ।**
**अपक्वः पक्वसङ्काशो, न तु शीर्येत कर्हिचित् ॥ २४ ॥**

[ अन्वयः ] सुपुष्पितः अफलः स्यात्, फलितः दुरारुहः स्यात्, अपक्वः पक्वसंकाशः स्यात्, कर्हिचित् तु न शीर्येत ॥ २४ ॥

[ विग्रहः ] शोभनानि पुष्पाणि सञ्जातान्यस्य सुपुष्पितः । नास्ति फलं यस्यासौ अफलः । दुःखेनारुह्यते दुरारुहः । न पक्वः-अपक्वः ।

[अर्थः] सुपुष्पितः=पुष्पभाराक्रान्तोऽपि । राजपक्षे-प्रसन्नः । भृत्येषु वाचा नेत्राभ्यां चानुग्रहं दर्शयन्नपि । अफलः=निष्फलः । फलरहितः । राजपक्षे-अदाता । स्यात्=भवेत् । भृत्यान् धनेन

---

१ सुपुष्पितः-वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात्, भृत्यं धनेन न वर्द्धयेत् । सफलोऽपि सन् दुरारुहः-भृत्यवश्यो न स्यात् । अपक्वः-अन्तर्बलहीनोऽपि बलवलवन्तमात्मानं बहिः प्रकटयेदेवेति नीलकण्ठः । न तु शीर्येत=पक्वफलवत्सर्वग्राह्यो मृदुः स्यात् । किन्तु काठिन्यमेव धारयेत् । राज्ञः सर्वथा मार्दवं नोचितमित्याशयः ।

न वर्द्धयेत्। फलितः=सफलः। फलभारविनम्रोऽपि। राजपक्षे दाताऽपि। दुरारुहः=दुरारोहः। समुन्नतः। राजपक्षे=दुर्धर्षः। भृत्यैरनाक्रान्तः। भवेत्=स्यात्। अपक्कः=अपरिपक्कोऽपि। पक्केन सङ्काशः-पक्वसंकाशः=पक्वसदृशः। भवेत्। नतु=नैव। कर्हिचित्=कदाचिदपि। शीर्येत=अवसीदेत्। पक्वफलवत्सर्वभक्ष्यो मृदुर्भूत्वा न विपत्तिमनुभवेत्। 'कदाचिच्चिन्तां न बहिः प्रकटयेत्'-दित्यर्थ इत्यन्ये।

( भाषाटीका ) वृक्ष की तरह राजा भी पुष्पित प्रसन्न होकर भी फल रहित रहे (नौकरों को कुछ भी न देवे)। कदाचित् सफल होने पर भी (कुछ देना भी पड़े तो भी) समुन्नत रहे (उन नौकरों के वशीभूत न हो)। कच्चा (निर्बल) होने पर भी पके ( सबल ) की तरह रहे। इस तरह राजा को सदा दुर्धर्ष रहना चाहिए। न कि पके फल की तरह बिखर कर नष्ट हो जाना चाहिए (राजा को मृदु न होना चाहिए)।

**चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्।**
**प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ २५ ॥**

[ अन्वयः ] यः मनसा चक्षुषा वाचा कर्मणा च चतुर्विधं ( यथा स्यात्तथा ) लोकं प्रसादयति, लोकः तम् अनु प्रसीदति ॥

[अर्थः] यः=यो राजा। मनसा=प्रसन्नेन स्वान्तेन। चक्षुषा=स्निग्धया दृष्ट्या। विकसितेन नेत्रेण। वाचा=मधुरया वाण्या। कर्मणा=हितावहेन कार्येण च। चतुर्विधं=चतुर्द्धा। लोकं=प्रजाम्। प्रसादयति=अनुरञ्जयति। लोकः=प्रजा। तं=तं राजानम्। अनुप्रसीदति=अनुरज्यति। तदनुरक्तो भवति।

( भाषाटीका ) जो राजा मन, नेत्र, वचन और कर्म ( इन ४ कार्यों से ) प्रजा को प्रसन्न करता है, उस पर प्रजा भी सदा प्रसन्न रहती है ॥ २५ ॥

**यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव।**
**सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २६ ॥**

[ अन्वयः ] यस्मात् मृगव्याधात् मृगाः इव भूतानि त्रस्यन्ति, सः सागरान्तां महीं लब्ध्वा अपि ( जनैः ) परिहीयते ॥

[ विग्रहः ] मृगान् विध्यतीति मृगव्याधः। सागरोऽन्तो यस्याः सा सागरान्ता, ताम्—सागरान्ताम्।

[ अर्थः ] यस्मात्=यस्मात्पुंसो, राज्ञो वा । मृगव्याधात्= मृगयोः सकाशात् । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । मृगा इव=हरिणा इव । भूतानि=प्रजाः । प्राणिनः । त्रस्यन्ति=बिभ्यति । उद्विजन्ते । सः=स राजा । सागरान्तां=समुद्रपर्यन्ताम् । महीं=पृथ्वीम् । लब्ध्वाऽपि= प्राप्याऽपि । चक्रवर्त्ती सन्नपि । परिहीयते=लोकैः परित्यज्यते । राज्यात्पतति ।

( भाषा ) जिस राजा से प्रजा इस तरह डरती हो जैसे व्याध से हरिण डरते हैं, तो वह राजा यदि समुद्रपर्यन्त पृथ्वी का राजा हो तो भी शीघ्र ही राज्य से च्युत हो जाता है ॥ २६ ॥

**पितृपैतामहं राज्यं प्राप्तवान्स्वेन कर्मणा ।**
**वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २७ ॥**

[ अन्वयः ] यः पितृपैतामहं राज्य प्राप्तवान् (अपि) अनये स्थितः, [ भवति, सः ] आसाद्य स्वेन कर्मणा वायुः अभ्रम् इव भ्रंशयति ॥२७॥

[ विग्रहः ] पितृपितामहानामिदं पितृपैतामहं, तत् पितृपैतामहम् । न नयः अनयः, तस्मिन् अनये ।

[ अर्थः ] यः=यो राजा । पितृपैतामहं-पितृपितामहपर्याया- गतम् । वंशपरम्परागतम् । राज्यं=राष्ट्रम् । राजसिंहासनम् । प्राप्तवान्=लब्धवान् अपि । अनये=अनीतौ । दुर्मार्गे । अनुचित- मार्गे । स्थितः=आस्थितः । आरूढो भवति । [ सः=स राजा] । आसाद्य=राज्यं प्राप्यापि । स्वेन=निजेन । कर्मणा=व्यापारेण । [ तत्=राज्यं ] वायुः=पवनः । अभ्रमिव=मेघमिव । भ्रंशयति= विनाशयति ।

(भाषा) जो राजा पिता पितामह आदि से उपार्जित वंशपरम्परा से प्राप्त राज्य को पाकर भी अनीति व पाप करता है वह अपने राज्य को इस तरह से नष्ट कर देता है जैसे मेघ को पवन नष्ट भ्रष्ट कर देता है । २७ ॥

**धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।**
**वसुधा वसुसम्पूर्णा वर्द्धते भूतिवर्द्धिनी ॥ २८ ॥**

[ अन्वयः ] आदितः सद्भिः चरितं धर्मम् आचरतः राज्ञः भूति-वर्द्धिनी वसुसम्पूर्णा वसुधा वर्द्धते ॥

[ अर्थः ] आदितः=सर्गस्यादितः । चिरकालात् । सद्भिः=सज्जनैः । चरितम्=अनुष्ठितम् । आचरितम् । धर्म=वर्णाश्रमादिधर्मम् । आचरतः=अनुशीलयतः । परिपालयतः । राज्ञः=नृपस्य । भूतिं वर्द्धयति तच्छीला भूतिवर्द्धिनी=सम्पद्विवर्द्धिनी । ऐश्वर्यसंवर्द्धिनी । वसुना सम्पूर्णा वसुसम्पूर्णा=धनधान्य-सम्पत्परिपूर्णा । वसुधा=वसुन्धरा । पृथिवी । राज्यमिति यावत् । वर्द्धते=समेधते । सर्वतः परिवर्द्धते ।

( भाषाटीका ) जो राजा सृष्टि के आदि काल से ऋषि मुनि व राजर्षियों द्वारा आचरण किए गए सनातनधर्म का ठीक २ पालन करता है उसका राज्य-धनधान्य से, ऐश्वर्य व सम्पत्ति से परिपूर्ण हो दिनरात बढ़ता ही जाता है ॥२८॥

**अथ सन्त्यजतो धर्ममधर्मं चाऽनुतिष्ठतः ।**
**प्रतिसंवेष्टते भूमिरग्नौ चर्माऽऽहितं यथा ॥ २९ ॥**

[ अन्वयः ] अथ धर्मं सन्त्यजतः, च अधर्मम् अनुतिष्ठतः [ राज्ञः ] भूमिः—अग्नौ आहितं चर्म यथा—प्रतिसंवेष्टते ॥ २९ ॥

[ अर्थः ] अथ=अथवा । किञ्च । पक्षान्तरे । धर्म=सुकृतम् । सदाचारम् । सन्त्यजतः=मुञ्चतः । च=किञ्च । पुनः । अधर्म=पापम् । दुष्कृतम् । अनुतिष्ठतः=आचरतः । ( राज्ञः-) भूमिः=धरित्री । राज्यमिति यावत् । अग्नौ=वह्नौ । आहितं=स्थापितम् । चर्म यथा=अजिनमिव । 'अजिनं चर्म कृत्तिः स्त्री'त्यमरः । प्रतिसंवेष्टते=संकुचति । तस्य वसुधा शनैः शनैर्विनश्यति । धनधान्यसम्पत्तिश्च सहसा विलीयते ।

( भाषाटीका ) और जो राजा धर्म को छोडकर अधर्म का आश्रयण करता है उसकी भूमि पूरा फल नहीं देती, और अकाल महामारी आदि की विपत्तियाँ आने लगती हैं, और राज्य व भूसम्पत्ति उसी प्रकार सिकुडने ( कम होने ) लगती हैं जैसे अग्नि पर रखा हुआ चमड़ा सिकुडता है । २९ ॥

**य एव यत्नः क्रियते परराष्ट्रविमर्दने ।**
**स एव यत्नः कर्त्तव्यः स्वराष्ट्रपरिपालने ॥ ३० ॥**

[ अन्वयः ] यः एव यत्नः [नृपैः] परराष्ट्रविमर्दने क्रियते सः एव यत्नः स्वराष्ट्रपरिपालने कर्त्तव्यः ॥

[ अर्थः ] य एव=यो वै । यत्नः=प्रयत्नः । [ नृपैः-] परस्य यद्राष्ट्रं तस्य यत् विमर्दनं, तस्मिन्=परराष्ट्रविमर्द्दने=परकीय-राज्यहरणे । शत्रुराज्यभङ्गे । क्रियते=विधीयते । स एव यत्नः=स एव प्रयत्नः । स्वस्य यद्राष्ट्रं तस्य यत् परिपालनं, तस्मिन्-स्व-राष्ट्रपरिपालने=स्वकीयराज्यपरिरक्षणे । कर्त्तव्यः=करणीयः ।

( भाषाटीका ) राजा लोग जो प्रयत्न दूसरे के राज्य को छीनने में करते हैं वही प्रयत्न उन्हें अपने राज्य की यथावत् रक्षा करने में करना चाहिए । क्योंकि दूसरे के राज्य को छीनने की अपेक्षा अपने राज्य की ठीक २ रक्षा की जाए तो बहुत अधिक लाभ हो सकता है ॥ ३० ॥

**धर्मेण राज्यं विन्देत, धर्मेण परिपालयेत् ।**
**धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३१ ॥**

[ अन्वयः ] धर्मेण राज्यं विन्देत, धर्मेण परिपालयेत् , धर्ममूलां श्रियं प्राप्य न ( श्रियं ) जहाति, न हीयते ॥

[ अर्थः ] धर्मेण=सुकृतेन । राज्यं=राष्ट्रं । विन्देत=लभेत । (ततश्च-) धर्मेण=सुकृतेनैव राज्यं । परिपालयेत्=तस्य राज्यस्य रक्षां कुर्यात् । (यतः) धर्मो मूलं यस्याः सा तां धर्ममूलां=सुकृत-मूलाम् । धर्मैकनिमित्ताम् । धर्ममार्गोपार्जिताम् । श्रियं=राज-लक्ष्मीम् । प्राप्य=लब्ध्वा । न जहाति=तां लक्ष्मीं न परित्यजति । हीयते=न च प्रजया न वा लक्ष्म्या स परित्यज्यते ।

( भाषा ) जो राजा धर्ममार्ग से राज्य प्राप्त करता है, एवं धर्म से ही उसकी रक्षा करता है तो वह कभी राज्य से च्युत नहीं होता है और न राजलक्ष्मी उसे छोडती है ॥ ३१ ॥

**अप्युन्मत्तात्प्रलपतो, बालाच्च परिजल्पतः ।**
**सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३२ ॥**

[ अन्वयः ] प्रलपतः उन्मत्तात् अपि, परिजल्पतः बालात् च—अश्म-भ्यः काञ्चनम् इव—सर्वतः सारम् आदद्यात् ॥

[ अर्थः ] ( राजा- ) प्रलपतः=निरर्थकं यत्किञ्चिज्जल्पतः। 'प्रलापोऽनर्थकं वचः' इत्यमरः। उन्मत्तादपि=विक्षिप्तादपि। किञ्च-परिजल्पतः=अव्यक्तमुच्चारयतः। बालाच्च=बालकाच्च। अश्मभ्यः=शिलाभ्यः। काञ्चनमिव=कनकमिव। सुवर्णमिव। सर्वतः=सर्वेभ्यः। सारं=तत्त्वम्। 'सारो बले स्थिरांशे च' इत्यमरः। आदद्यात्=गृह्णीयात्।

( भाषा ) राजा को व्यर्थ बक झक करते हुए पागल से, तथा तुतली बोली से कुछ अस्पष्ट कहते हुए बच्चे से भी सार की बात उसी तरह निकालना चाहिए जैसे पत्थरों से ( खान से ) सोना निकाला जाता है ॥ ३२ ॥

**सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः।**
**सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥ ३३ ॥**

[ अन्वयः ] धीरः ततः ततः सुव्याहृतानि सूक्तानि सुकृतानि (च) सञ्चिन्वन्—शिलाहारी शिलं यथा—आसीत ॥

[ अर्थः ] धीरः=धैर्यवान्। विवेकी। शिलमाहर्तुं शीलमस्य शिलाहारी=क्षेत्राद्यर्जितकणिशभक्षी मुनिः। शिलं यथा=कणिशमिव। ततस्ततः=इतस्ततः। सर्वतः। सुष्ठु व्याहृतानि=सुव्याहृतानि=प्राज्ञैः समुचिते काले सुष्ठु समुदीरितानि। अवसरोक्तानि। सूक्तानि=सुभाषितानि। सुकृतानि=सत्कर्माणि। पुण्यानि च। धर्ममिति यावत्। सञ्चिन्वन्=संगृह्णन्। आसीत=तिष्ठेत्।

[कोशः] 'उञ्छः कणश आदानं, कणिशाद्यर्जनं शिलम्' इति वैजयन्ती।

( भाषा ) जैसे खेतों से गिरी हुई अन्न की मञ्जरी ('बाल' 'सिट्टा' 'फली') चुग ( बीन ) कर खाने वाले मुनिगण इधर उधर बिखरी हुई अन्न की बालों को चुगते हैं वैसे ही राजा को भी सब जगह से मौके २ पर कहे गए बडे बूढे व विद्वानों के सुन्दर २ सुभाषितों व सत्कर्मों (पुण्यों) का चुन २ कर सङ्ग्रह करना चाहिए ॥ ३३ ॥

**गन्धेन गावः पश्यन्ति, वेदैः पश्यन्ति ब्राह्मणाः।**
**चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३४ ॥**

[ अन्वयः ] गावः गन्धेन पश्यन्ति, ब्राह्मणाः वेदैः पश्यन्ति, राजानः चारैः पश्यन्ति, इतरे जनाः चक्षुर्भ्याम् ( पश्यन्ति ) ॥

[ अर्थः ] गावः=धेनवः। पशवः। गन्धेन=सुगन्धेन, दुर्गन्धेन च। पश्यन्ति=जानन्ति। ब्राह्मणाः=विप्राः। वेदैः=श्रुतिभिः। पश्यन्ति=तत्त्वं जानन्ति। राजानः=नृपाः। चारैः=प्रणिधिभिः। पश्यन्ति। इतरे=साधारणाः। जनाः=लोकाः। चक्षुर्भ्यां=नेत्राभ्याम्। 'पश्यन्ती'ति शेषः।

(भाषाटीका) गौ, भैंस आदि पशु सूंघकर जानते हैं, ब्राह्मण लोग वेद शास्त्रों से जानते हैं, राजालोग चारों ( 'गुप्तदूत' 'जासूस' ) से जानते हैं। मामूली मनुष्य आँखों से देख कर ही किसी वस्तु को जान पाते हैं॥ ३४॥

**भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा।**
**अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि॥ ३५॥**

[ अन्वयः ] हे राजन्! या गौः दुर्दुहा भवति ( सा ) भूयांसं क्लेशं लभते, अथ या सुदुहा ( भवति ) तां (जनाः) नैव वितुदन्ति अपि।

[ अर्थः ] हे राजन्! या-गौः=धेनुः। दुःखेन दुह्यते इति दुर्दोहा=कृच्छ्रदोह्या। कठिना। भवति=अस्ति। (सा) भूयांसं=विपुलम्। क्लेशं=पादबन्धनादिकम्। लभते=प्राप्नोति। अनुभवति। अथ=पक्षान्तरे। या=गौः। सुखेन दोह्यते-सुदुहा=अनायासदोहनाऽर्हा भवति। तां=धेनुम्। ( जनाः ) नैव-वितुदन्त्यपि-नैव पीडयन्त्यपि।

( भाषाटीका ) जो गाय कठिनता से दूध देती है वह बहुत कष्ट उठाती है और उसके पैर भी बान्ध दिए जाते हैं। परन्तु जो गाय अनायास ही दूध दे देती है उसे लोग कुछ भी कष्ट नहीं पहुंचाते हैं अतः आप युधिष्ठिर का हिस्सा चुपचाप दे दीजिए, नहीं तो बहुत कष्ट पाइएगा॥ ३५॥

**यदतप्तं प्रणमति न तत्सन्तापयन्त्यपि।**
**यच्च स्वयं नतं दारु न तत्सन्नमयन्त्यपि॥ ३६॥**

[ अन्वयः ] यत् अतप्तं प्रणमति तत् ( जनाः ) न सन्तापयन्ति अपि। यच्च दारु स्वयं नतं [भवति] तत् [जनाः] न सन्नमयन्ति अपि॥

[ अर्थः ] यत्=यल्लौहादि। अतप्तम्=असन्तप्तमपि। प्रण-

मति=सन्नतं भवति । नम्रं भवति । तत्-लोहादि । ( जनाः- ) । न सन्तापयन्त्यपि=नैव सन्तापयन्ति । यच्च-दारु=काष्ठम् । स्वयम्=आत्मना । नतं=सन्नतं भवति । तत्-तत्काष्ठम् । [ जनाः ] न सन्नमयन्त्यपि=नैव सन्नतं कुर्वन्ति ।

( भाषा ) जो चीज बिना गर्म किये ही मुड़ जाती है उसे लोग गर्म नहीं करते, एवं जो वस्तु स्वयं ही मुड़ने वाली ( लचीली ) होती है उसे भी लोग नहीं मोड़ते हैं अतः प्रबल के सामने झुकना ही अच्छा है ॥ ३६ ॥

**एतयोपमया धीरः सन्नमेत बलीयसे ।**
**इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३७ ॥**

[ अन्वयः ] धीरः एतया उपमया बलीयसे सन्नमेत, यः बलीयसे नमते सः इन्द्राय प्रणमते ॥ ३६ ॥

[ अर्थः ] धीरः=धैर्यवान् राजा । एतया=अनया पूर्वोक्तया । उपमया=दारुलोहादिवस्तूपमया । पूर्वोक्तोदाहरणेन । बलीयसे= बलशालिने । बलवन्तं रिपुमनुकूलयितुम् । संनमेत=नम्रो भवेत् । यतः-यः=यो दुर्बलो मनस्वी राजा । बलीयसे=प्रकृष्ट- बलाय रिपवे । तमनुकूलयितुम् । नमते=प्रणमति । सः=राजा । इन्द्राय=बलाधिष्ठातृदेवतायै महेन्द्राय । प्रणमते=प्रणमति । इह नम्धातोरात्मनेपदप्रयोगश्छान्दसत्वात् ।

( भाषाटीका ) इस पूर्वोक्त उदाहरण को ध्यान में रखके विद्वान् मनुष्य को बलवान् शत्रु के सामने नम्र हो जाना चाहिए । जो बलवान् शत्रु के सामने झुकता है वह वास्तव में ( बल के अधिष्ठाता ) भगवान् इन्द्र के ही सामने झुकता है, उस राजा के सामने नहीं । अतः इसमें कोई अपना अपमान न समझे । ३७ ।

**पर्जन्यनाथाः पशवो, राजानो मन्त्रिबान्धवाः ।**
**पतयो बान्धवाः स्त्रीणां, ब्राह्मणा वेदबान्धवाः ॥ ३८ ॥**

[ अन्वयः ] पशवः पर्जन्यनाथाः ( भवन्ति ) राजानः मन्त्रि- बान्धवाः ( भवन्ति ) । पतयः स्त्रीणां बान्धवाः ( भवन्ति ) । ब्राह्मणाः वेदबान्धवाः ( भवन्ति ) ॥ ३८ ॥

[ अर्थः ] पशवः=गवादयः पशवः । पर्जन्यः नाथो येषान्ते

पर्जन्यनाथाः=मेघस्वामिकाः । मेघाधीना भवन्ति, तस्यैव स्वभक्ष्यभूततृणादिसम्पादकत्वात् । राजानः=नृपाः । मन्त्रिणो बान्धवा येषान्ते मन्त्रिबान्धवाः=सचिवसहायाः भवन्ति । पतयः=भर्त्तारश्च । स्त्रीणां=योषिताम् । बान्धवाः=सहायाः । भवन्तीति शेषः । ब्राह्मणाः=विप्राः । वेदा बान्धवा येषान्ते वेदबान्धवाः=वेदसहायाः । वेदप्रमाणका भवन्ति । वेदोदितकर्मप्रधानत्वाद्विप्राणाम् ।

[ कोशः ] 'धवः प्रियः पतिर्भर्त्ता' इत्यमरः । 'स्त्री योषिदबला योषा' इत्यमरः । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः ।

( भाषाटीका ) पशुओं का सहायक ( रक्षक ) मेघ हैं, राजाओं के सहायक मन्त्री हैं । स्त्रियों के सहायक उनके पति हैं और ब्राह्मणों के सहायक वेद हैं ॥३८॥

**सत्येन रक्ष्यते धर्मो, विद्या योगेन रक्ष्यते ।**
**मृजया रक्ष्यते रूपं, कुलं वृत्तेन रक्ष्यते ॥ ३९ ॥**

[ अन्वयः ] धर्मः सत्येन रक्ष्यते, विद्या योगेन रक्ष्यते, रूपं मृजया रक्ष्यते, कुलं वृत्तेन रक्ष्यते ॥ ३९ ॥

[ अर्थः ] धर्मः=सुकृतं । सत्येन=सत्यभाषणेन । रक्ष्यते=पाल्यते । विद्या=विद्यास्थानानि, शास्त्राणि, कलाश्च । योगेन=अभ्यासेन । मननेन । ध्यानेन । समाधिना । रक्ष्यते=पाल्यते । 'विद्या=ब्रह्मज्ञानम् । योगेन=समाधिना, चित्तवृत्तिनिरोधेन । रक्ष्यते' इति वाऽर्थः । मृजया=शुद्ध्या । उद्वर्त्तनादिना । परिष्कारेण । रूपं=सौन्दर्यम् । रक्ष्यते । कुलं=वंशः । वृत्तेन=सद्वृत्तेन । सदाचारेण । रक्ष्यते=परिपाल्यते ।

[ कोशः ] 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । 'वृत्तं पद्ये चरित्रे' इत्यमरः । 'कुलान्यभिजनान्वयौ' इत्यमरः ।

(भाषा) धर्म की रक्षा सत्य से, विद्या की रक्षा अभ्यास से, सौन्दर्य की रक्षा बनाव शृङ्गार आदि से, कुल की रक्षा सदाचार व सुशील से होती है ॥ ३९ ॥

**मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।**
**अभीक्ष्णदर्शनं गाश्च, स्त्रियो रक्ष्याः कुचैलतः ॥४०॥**

[ अन्वयः ] मानेन धान्यं रक्ष्यते, अनुक्रमः अश्वान् रक्षति, अभीक्ष्ण-

दर्शनं गाः च ( रक्षति ), स्त्रियः कुचैलतः रक्ष्याः ॥ ४० ॥

[ अर्थः ] धान्यं=व्रीहियवादिधान्यम् । मानेन=प्रस्थादिपरिमाणेन । रक्ष्यते=परिपाल्यते । अनुक्रमः=व्यायामशिक्षणम् । परिचालनम् । इतस्ततश्चङ्क्रमणम् । अश्वान्=वाजिनः । रक्षति=पालयति । अभीक्ष्णं दर्शनम्-अभीक्ष्णदर्शनं=मुहुःपर्यवेक्षणं, हस्तस्पर्शनादिकञ्च । गाश्च=धेनूश्च । रक्षतीति शेषः । स्त्रियः=योषितः। कुचैलतः=कुत्सितमलिनपरिधानादिवस्त्रेभ्यः । रक्ष्या =रक्षणीयाः ।

( भाषा ) धान्य ( अन्न ) की रक्षा तौल से होती है। घुमाने फिराने से घोड़े रक्षित ( ठीक ) होते हैं। हर समय देखभाल से गौवों की रक्षा होती है। स्त्रियों की रक्षा, मैले वस्त्रों से होती है। अर्थात् पतिको ध्यान रखना चाहिए कि स्त्रियों के पास पहिनने के अच्छे २ वस्त्र हों मलिन वस्त्र न रहें ( या ज्यादा बनाव शृङ्गार से स्त्री को बचाना चाहिए। स्त्रियों के वस्त्र तडक भडक के वस्त्र न हो ) ॥ ४० ॥

**न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।**
**अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४१ ॥**

[अन्वयः] वृत्तहीनस्य कुलं न प्रमाणम् इति मे मतिः। हि अन्तेषु अपि जातानां वृत्तम् एव विशिष्यते ॥ ४१ ॥

[ अर्थः ] वृत्तेन हीनो वृत्तहीनस्तस्य वृत्तहीनस्य=सदाचाररहितस्य । चरित्रशून्यस्य । कुलं=सत्कुलम् । सद्वंशे जन्म । न=नैव । प्रमाणं=योग्यतासूचकम् । प्रमाणभूतम् । इति=इत्येवम् । मे=मम । मतिः=निश्चयः । हि=यतः । अन्तेषु अपि=नीचकुलेष्वपि । जातानां=समुत्पन्नानाम् । वृत्तमेव=शीलमेव । सदाचार एव । विशिष्यते=अतिरिच्यते । वैशिष्ट्यहेतुर्भवति ।

( भाषा ) जो सदाचार से रहित है उसका अच्छे कुल में उत्पन्न होना ही योग्यता मे प्रमाण नहीं हो सकता है ऐसा मेरा मत है। क्योंकि नीच कुल में उत्पन्न मनुष्य भी सदाचार से ही सन्मान को प्राप्त होते हैं। अतः सदाचार ही बड़प्पन का कारण है, सत्कुल में उत्पन्न होना मात्र ही श्रेष्ठता में कारण नहीं है ॥

**य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।**
**सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४२ ॥**

[ अन्वयः ] यः परवित्तेतु रूपे वीर्ये कुलान्वये सुखसौभाग्यसत्कारे ईर्षुः तस्य अनन्तकः व्याधिः ( अस्ति ) ॥

[अर्थः] यः=यः पुमान् । परेषां वित्तानि, परवित्तानि, तेषु-परवित्तेषु=परधनेषु । परकीयद्रव्येषु । रूपे=स्वरूपे । सौन्दर्ये । वीर्ये=पराक्रमे । कुलस्यान्वयः-कुलान्वयस्तस्मिन् कुलान्वये=कुलपरम्परायाम् । सत्कुलसम्बन्धे । सुखं च सौभाग्यं च सत्कारश्चैषां समाहारः—सुखसौभाग्यसत्कारम् । यद्वा=सुखं च सौभाग्यञ्च सुखसौभाग्ये । सुखसौभाग्याभ्यां सहितः सत्कारः-सुखसौभाग्यसत्कारः, तस्मिन्=सुखसौभाग्यसत्कारे=सुखैश्वर्यसम्मानविशेषे । ईर्षुः=ईर्ष्यावान् । भवति । तस्य=ईर्ष्यापरायणस्य पुंसः । अनन्त एव-अनन्तकः=अपरिमितः । व्याधिः=सन्तापरूपो रोगः । अस्तीति शेषः ।

(भाषा) जो व्यक्ति दूसरे के धन, रूप, पराक्रम, कुल, खान्दान, सुख, सौभाग्य सन्मान आदि को देखकर ईर्ष्या करता है उसका यह सन्तापरूपी रोग कभी नहीं छूटता है । अर्थात् वह सदाही जला करता है, उसे कभी शान्ति नहीं मिलती ॥४२॥

**अकार्यकारणाद्भीतः कार्याणां च विवर्जनात् ।**
**अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४३ ॥**

[ अन्वयः ] अकार्यकरणात् , कार्याणां च विवर्जनात् , अकाले मन्त्रभेदात् च भीतः ( राजा ) येन माद्येत् तत् न पिबेत् ॥ ४३ ॥

[अर्थः] अकार्याणां करणम् अकार्यकरणं, तस्मात्-अकार्यकरणात्=अनुचिताऽसभ्याचरणात् । कार्याणां च=कर्त्तव्यकर्मणां च । विवर्जनात्=परित्यागात् । अकाले=अनवसरे । मन्त्रस्य भेदो मन्त्रभेदः, तस्मात्=मन्त्रभेदाच्च=मन्त्रितनीतिरहस्योद्घाटनाच्च हेतोः । भीतः=त्रस्तः सन् । राजा येन=मद्येन । माद्येत्=प्रमत्तो भवेत् । तत्=मद्यम् । न पिबेत्=न सेवेत ।

( भाषा ) मद्य पीने से मनुष्य अनुचित कार्य करने लगता है, कर्त्तव्यकार्यों को छोड़ देता है, गुप्त बातों को वेमौके ही प्रकट कर देता है, अतः बुद्धिमान् राजा उस पेय को ( मदिरा को ) न पीए जिससे इस प्रकार मनुष्य उन्मत्त हो जाता है। ( इस श्लोक के अर्थ में बहुत से टीकाकार गड़बड़ा गए हैं। हमारा अर्थ ठीक है-या नहीं-यह पण्डित लोग ही विचार करें ) ॥ ४३ ॥

**विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।**
**मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ४४ ॥**

[ अन्वयः ] विद्यामदः धनमदः तृतीयः अभिजनः मदः, एते अवलिप्तानां मदाः, एते एव [ तु विपरीताः ] सतां दमाः ॥ ४४ ॥

[ अर्थः ] विद्याया मदः—विद्यामदः=शास्त्रकलाज्ञानमदः । धनमदः=द्रव्यसम्पत्तिगर्वः । तृतीयः—अभिजनः=सत्कुलरूपः । सत्कुलोत्पन्नत्वरूपः । 'कुलान्यभिजनान्वयौ' इत्यमरः । मदः=गर्वः । एते=विद्यामदादयः । अवलिप्तानां=गर्वितानाम् । मदाः=उन्मादकाः भवन्ति । एत एव=विद्यादय एव । ( विपरीतं-) सतां=सज्जनानाम् । दमाः=उपशान्तिप्रदाः । भवन्ति ।

( भाषा ) संसार में विद्यामद, धनमद, सत्कुल का मद ये तीन मद ( नशा ) हैं। परन्तु ये घमण्डियों के लिए ही मद (नशा) हैं। सज्जनों के लिए तो ये उलटे-दम = शान्ति हैं ( मदको उलट देनेसे दम हो जाता है ) ॥ ४४ ॥

**असन्तोऽभ्यर्थिताः सद्भिः क्वचित्कार्ये कदाचन ।**
**मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ४५ ॥**

[ अन्वयः ] क्वचित् कार्ये कदाचन सद्भिः अभ्यर्थिताः असन्तः असन्तम् अपि विश्रुतम् आत्मानं सन्तं मन्यन्ते ।

[ अर्थः ] क्वचित्=कस्मिंश्चित् । कार्ये=कर्मणि । कदाचन=कस्मिंश्चित्समये । सद्भिः=सज्जनैः । अभ्यर्थिताः=प्रार्थिताः । असन्तः=असाधवः । असन्तमपि=दुष्टमपि । विश्रुतं=प्रसिद्धम् । दुष्टतया जगति प्रसिद्धमपि । आत्मानं=स्वम् । सन्तं=सज्जनम् । मन्यन्ते=जानन्ति ।

( भाषा ) यदि सज्जन लोग कभी किसी दुष्ट को अच्छे कार्य में सहायता करने के लिए प्रार्थना करते हैं तो वे दुष्ट भी-जो जगत् में पूर्णरूप से बदनाम हैं-अपने को बड़ा सज्जन समझने लगते हैं ॥

**गतिरात्मवतां सन्तः, सन्त एव सतां गतिः ।**
**असतां च गतिः सन्तो, न त्वसन्तः सतां गतिः ॥४६॥**

[ अन्वयः ] सन्तः आत्मवतां गतिः, सन्तः एव सतां गतिः, च सन्तः असतां गतिः, तु असन्तः सतां न गतिः ॥ ४६ ॥

[ अर्थः ] सन्तः=सज्जनाः । साधवः । आत्मवतां=महात्मनाम् । प्राणिनामिति वा । गतिः=शरणम् । सन्त एव=सज्जना एव च । सतां=सज्जनानाम् । गतिः=शरणम् । चः=पुनः । किञ्च । सन्तः—साधवः । असतां=दुष्टानामपि । गतिः = सहायकाः । तु=परन्तु । असन्तः=दुष्टास्तु । सतां=सज्जनानाम् । नैव । गतिः=सहायकाः । भवन्तीति शेषः ।

( भाषा ) सज्जन सभी प्राणियों ( जीवों ) के ( या महात्माओं के ) सहायक हैं, सज्जन-सज्जनों के हितकारी हैं, सज्जनगण दुष्टों के भी हितकारी हैं । पर दुष्टगण किसी सज्जन का कभी उपकार नहीं करते । अर्थात् पाण्डवों ने तुमारे पुत्रों के साथ बड़े २ उपकार किए हैं । पर तुमारे पुत्र तो पूरे खल ( दुष्ट ) हैं, वे युधिष्ठिर आदि के साथ अच्छा व्यवहार नहीं कर रहे हैं ॥ ४६ ॥

**जिता सभा वस्त्रवता, मिष्टाशा गोमता जिता ।**
**अध्वा जितो यानवता, सर्वं शीलवता जितम् ॥ ४७ ॥**

[ अन्वयः ] वस्त्रवता सभा जिता, गोमता मिष्टाशा जिता, यानवता अध्वा जितः, शीलवता सर्वं जितम् ॥

[ विग्रहः ] शोभनानि वस्त्राणि सन्त्यस्य-वस्त्रवान्, तेन वस्त्रवता । गावोऽस्य सन्ति गोमान्, तेन गोमता । यानमस्त्यस्य यानवान्, तेन यानवता । शीलमस्त्यस्य शीलवान् । तेन शीलवता ।

[ अर्थः ] वस्त्रवता = शोभनवसनवता । सभा = परिषत् । जिता=अनुरञ्जिता । गोमता=धेनुमता । मिष्टस्याशा मिष्टाशा=मिष्टान्नेच्छा । जिता=दूरीकृता । यानवता=अश्वादिवाहनवता च । रथिना । अध्वा=मार्गः । जितः=विजितः । शीलवता=सुशीलेन तु । सर्वं=सकलं जगत् । जितम् = वशीकृतम् ।

( भाषाटीका ) अच्छे वस्त्रों वाला सभा को, गौ रखने वाला मिष्टान्न की इच्छा को, सवारी रखने वाला रास्ते के कष्टों को, शीलवाला व्यक्ति सम्पूर्ण जगत् को जीत लेता है ॥ ४७ ॥

शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनाऽर्थो न धनेन न बन्धुभिः ॥४८॥

[अन्वयः] पुरुषे शीलं प्रधानं, तत् इह यस्य प्रणश्यति तस्य जीवितेन न अर्थः, धनेन न ( अर्थः ), बन्धुभिः न ( अर्थः ) ।

[ अर्थः ] पुरुषे=पुंसि । शीलं=सदाचारः । प्रधानं=मुख्यम् । तत्=शीलम् । इह=जगति । यस्य=पुंसः । प्रणश्यति=विनश्यति । तस्य=पुंसः । जीवितेन=जीवनेन । नार्थः=न प्रयोजनम् । धनेन=द्रव्येणाऽपि । न=नार्थः । बन्धुभिः=बान्धवैश्च । न=नार्थः ।

( भाषाटीका ) मनुष्य में शील सदाचार ही प्रधान है, वह शील जिसका चला गया है उसके जीने से व उसके धन से व बन्धु बान्धवों में कोई प्रयोजन ( लाभ ) नहीं है । ( उसका तो मरना ही अच्छा है ) ॥ ४८ ॥

आढ्यानां मांसपरमं, मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ! ॥ ४९ ॥

[ अन्वयः ] हे भरतर्षभ ! आढ्यानां मांसपरमं, मध्यानां गोरसोत्तरम्, दरिद्राणां तु तैलोत्तरं भोजनम् ( भवति ) ।

[ अर्थः ] हे भरतर्षभ=हे भरतकुलश्रेष्ठ ! । आढ्यानां=धनिनाम् । मांसं परमं यस्मिन् तत्-मांसपरमम्=मांसप्रधानम् । मध्यानां=मध्यमवित्तानां गृहस्थानान्तु । गोरस उत्तरो यस्मिस्तत् गोरसोत्तरम्=दुग्धदध्यादिप्रधानम् । दरिद्राणां=दुर्गतानाम् । तैलमुत्तरं यस्मिन् तत् तैलोत्तरं=तिलसर्षपादितैलप्रधानम् । भोजनं=भक्ष्यम् । भवतीति शेषः ।

( भाषा ) हे राजन् । धनियों का भोजन मांस मदिरा आदि से युक्त, मध्यम गृहस्थों का दूध दही मक्खन से युक्त, दरिद्रों का विशेषतः तैल से युक्त होता है ।९।

सम्पन्नतरमेवाऽन्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाऽऽढ्येषु सुदुर्लभा ॥५०॥

[ अन्वयः ] (परन्तु) दरिद्राः सम्पन्नतरम् एव अन्नं सदा भुञ्जते । ( यतः ) क्षुत् स्वादुतां जनयति, सा च आढ्येषु सुदुर्लभा ॥

[ अर्थः ] ( परन्तु ) दरिद्राः=निर्धनाः । अतिशयेन सम्पन्नं

तत्तथाभूतं सम्पन्नतरमेव=स्वादुतरमेव । मिष्टतरमेव । अन्नं=भक्ष्यम् । सदा=सर्वदा । भुञ्जते=भक्षयन्ति । (यतः)-क्षुत्=बुभुक्षा । स्वादुतां=मिष्टताम् । जनयति=उत्पादयति । सा च=बुभुक्षा च । आढ्येषु=सम्पन्नेषु धनिषु । सुदुर्लभा=नितरां दुर्लभैव ।

( भाषा ) परन्तु गरीबों का भोजन सदा मीठा व सुस्वादु होता है, क्योंकि भूख ही स्वाद को उत्पन्न करती है और वह भूख धनियों को तो दुर्लभ है । अतः अन्न का स्वाद धनियों को नहीं मिलता है ॥ ५० ॥

**प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।**
**जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ! ॥५१॥**

[अन्वयः] महीपते ! प्रायेण लोके श्रीमतां भोक्तुं शक्तिः न विद्यते, ( परन्तु ) दरिद्राणां काष्ठानि अपि हि जीर्यन्ति ॥

[ अर्थः ] महीपते=हे राजन् ! प्रायेण=बाहुल्येन । लोके=जगति । श्रीमतां=धनिनाम् । भोक्तुम्=उपभोक्तुम् । शक्तिः=सामर्थ्यम् । न विद्यते=न भवति । परन्तु दरिद्राणां-निर्धनानां पुनः । काष्ठान्यपि-दारूण्यपि । हि-निश्चयेन । जीर्यन्ति=परिपच्यन्ते ।

( भाषाटीका ) हे राजन् ! प्रायः धनियों को भोजन करने की शक्ति नहीं रहती है । और दरिद्रों के पेट में तो काठ भी पच जाता है ।' ५१ ॥

**अवृत्तिर्भयमन्त्यानां, मध्यानां मरणाद्भयम् ।**
**उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५२ ॥**

[ अन्वयः ] अन्त्यानाम् अवृत्तिः भयं, [भवति] । मध्यानां मरणात् भयम् । उत्तमानां मर्त्यानां तु अवमानात् परं भयम् [भवति] ॥

[ अर्थः ] अन्त्यानां=नीचानाम् । न वृत्तिः-अवृत्ति=वृत्त्यभावः । जीविकाऽभाव एव । भयं=भीतिः । मध्यानां=साधारणानां जनानान्तु । मरणात्=मृत्योः । भयं=भीः । उत्तमानां-श्रेष्ठानाम् । मर्त्यानान्तु=मनुष्याणान्तु । अवमानात्=अपमानादेव । परं=महत् । भयम् । भवतीति शेषः ।

(भाषाटीका) नीच श्रेणि के पुरुषों को जीविका की हानि व अभाव का, मध्यम श्रेणि पुरुषों को मृत्यु का, उच्च कोटि के पुरुषों को अपमान का ही भय होता है, अन्य ी का नहीं ॥ ५२ ॥

**ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।**
**ऐश्वर्यमदमत्तो हि नाऽपतित्वा विबुध्यते ॥ ५३ ॥**

[अन्वयः] पानमदादयः मदा ऐश्वर्यमदपापिष्ठाः। हि ऐश्वर्यमदमत्तः अपतित्वा न विबुध्यते ॥

[विग्रहः] ऐश्वर्यस्य मदः ऐश्वर्यमदः, अतिशयेन पापः पापिष्ठः। ऐश्वर्यमदः पापिष्ठो येषु ते ऐश्वर्यमदपापिष्ठाः। पानेन मदः–पानमदः। स आदिर्येषान्ते पानमदादयः। ऐश्वर्यमदेन मत्तः–ऐश्वर्यमदमत्तः।

[अर्थः] पानमदादयः=मद्यपानादिजन्यमदादयो नानाविधाः। मदाः=गर्वाः। ऐश्वर्यमदपापिष्ठाः=प्रभुत्वगर्वाद्‌दुत्तमाः। ऐश्वर्यमदः सर्वेषु मदेषु जघन्यः। हि=यतः। ऐश्वर्यमदमत्तः=प्रभुत्वगर्वोन्मत्तः। अपतित्वा=ऐश्वर्याद्विच्युतिमप्राप्य। ऐश्वर्यात्पतनं विना। न विबुध्यते=न प्रबुध्यते।

(भाषा) मदिरापान आदि सभी मदों (नशों) से ऐश्वर्य (धन सम्पत्ति, राज्य, अधिकार प्रभुत्व) का मद सबसे खराब है, क्योंकि और नशे तो जल्दी दूर हो जाते हैं पर ऐश्वर्य का मद तो उस ऐश्वर्य से गिरे बिना नहीं जाता ॥५३॥

**इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।**
**तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५४ ॥**

[अन्वयः] इन्द्रियार्थेषु वर्तमानैः अनिग्रहैः तैः इन्द्रियैः ग्रहैः नक्षत्राणि इव अयं लोकः ताप्यते ॥

[अर्थः] इन्द्रियाणामर्थाः–इन्द्रियार्थाः, तेषु इन्द्रियार्थेषु=शब्दगन्धरसादिषु विषयेषु। वर्त्तमानैः=प्रवर्त्तमानैः। अत एव-अनिग्रहैः=अवशैः। स्वतन्त्रैः। तैः=प्रसिद्धैः। इन्द्रियैः=श्रोत्रादीन्द्रियैः। ग्रहैः=सूर्यादिनवग्रहैः। नक्षत्राणीव=तारका इव। अयम्=एषः। लोकः=मनुष्यलोकः। अयं जनः। ताप्यते=पीड्यते।

(भाषा) विषयों में लगे हुए दुर्दान्त इन्द्रियों से संसार में लोग उसी तरह पीडित हैं जैसे सूर्य आदि नव ग्रहों से अश्विनी आदि नक्षत्र पीडित होते हैं ।५४।

**यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।**
**आपदस्तस्य वर्द्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५५ ॥**

[ अन्वयः ] यः आत्मकर्षिणा सहजेन पञ्चवर्गेण जितः तस्य आपदः शुक्लपक्षे उडुराट् इव वर्धन्ते ॥

[ अर्थः ] यः=यः पुमान्। आत्मानं कर्षति तच्छीलः आत्मकर्षी, तेन आत्मकर्षिणा=चित्ताकर्षणशीलेन। सह जायते इति सहजः, तेन सहजेन=स्वाभाविकेन। नैसर्गिकेण। पञ्चानां वर्गः पञ्चवर्गः, तेन-पञ्चवर्गेण=श्रोत्रनेत्रादीन्द्रियपञ्चकेन। जितः=स्ववशीकृतः। तस्य=तस्य पुंसः। आपदः=विपत्तयः। शुक्लः पक्षः शुक्लपक्षः, तस्मिन्-शुक्लपक्षे=धवलपक्षे। उडुराडिव=चन्द्रमा इव। वर्द्धन्ते=समेधन्ते।

( भाषा ) जो मनुष्य कान, नाक, आँख, जीभ, त्वक् ( शिश्न ) इन पाँच इन्द्रियों के वश में हो जाता है उसकी विपत्तियाँ शुक्ल पक्ष के चन्द्रमा की तरह नित्य बढती ही जाती हैं ॥ ५५ ॥

**अविजित्य य[1] आत्मानममात्यान् विजिगीषते।**
**अमित्रान्वाऽजिताऽमात्यः सोऽवशः परिहीयते ॥५६॥**

[ अन्वयः ] यः आत्मानम् अविजित्य अमात्यान् अमित्रान् वा विजिगीषते—अजितामात्यः स अवशः परिहीयते ॥

[ अर्थः ] यः=यो राजा। आत्मानं=स्वात्मानम्। अविजित्य=अवशीकृत्य। अमात्यान्=पुत्रान्। सहचारिणः। मन्त्रिणः। अमित्रान्वा=शत्रूंश्च। रिपून्वा। विजेतुमिच्छति विजिगीषते=विजेतुमिच्छति। न जिता अमात्या येनाऽसौ-अजिताऽमात्यः=अवशीकृतमन्त्रिवर्गः। सः=स राजा। अवशः=अविजितात्मा, परवशः सन्। परिहीयते=विनश्यति। राष्ट्राद्भ्रश्यते। लोकैः परित्यज्यते।

(भाषा) जो राजा अपने इन्द्रियों व मन को बिना जीते अपने मन्त्रियों को जीतना चाहता है या मन्त्रिमण्डलको व पुत्रों को वश में न करके शत्रुओं को जीतना चाहता है वह नष्ट होजाता है ॥ ५६ ॥

१ 'यथात्मान'मिति केचित्पठन्ति।

**आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।**
**ततोऽमात्यानमित्रांश्च, न मोघं विजिगीषते ॥ ५७ ॥**

[ अन्वयः ] (अतः) प्रथमं आत्मानमेव द्वेष्यरूपेण योजयेत् , ततः अमात्यान् , अमित्रान् च,(द्वेष्यरूपेण योजयेत्)। [तत्] न मोघं विजिगीषते।

[ अर्थः ] [ अतः=अस्मात्कारणात् ] प्रथमम्=आदौ । आत्मानमेव=स्वात्मानमेव । द्वेष्यरूपेण=शत्रुरूपेण । योजयेत्=संयोजयेत्। तमेवादौ वशे कुर्यात्। ततः=तदनन्तरम् । अमात्यान्=पुत्रादीन्। मन्त्रिणः। अमित्रांश्च=शत्रूंश्च । द्वेष्यरूपेण योजयेत्=विजेतुमिच्छेत् । [ एवं कृत्वा तत् ] मोघं=व्यर्थम् । न विजिगीषते=न विजेतुमिच्छति । तस्य तत् कर्म सफलं भवति ।

[ भावार्थः ] तस्य शत्रुविजयप्रयासो विफलो न भवतीत्याशयः ।

( भाषा ) इसलिए पहिले अपनी आत्मा को ( मन व इन्द्रियों को ) ही शत्रु समझकर उन्हे वश में करे । तब मन्त्रियों को व शत्रुओंको जीतने का प्रयत्न करे । इस प्रकार उसका विजय निश्चित ही होता है ॥ ५७ ॥

**वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।**
**परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५८ ॥**

[ अन्वयः ] श्रीः वश्येन्द्रियं जितात्मानं विकारिषु धृतदण्डं परीक्ष्यकारिणं धीरम् अत्यन्तं निषेवते ॥

[ अर्थः ] श्रीः=राजलक्ष्मीः । वश्यानीन्द्रियाणि यस्यासौ वश्येन्द्रियः, तं-वश्येन्द्रियं=जितेन्द्रियम् । जित आत्मा येनासौ जितात्मा, तं-जितात्मानं = विजिताऽन्तःकरणम् । विकारिषु=अपराधिषु । दुष्टेषु च । धृतो दण्डो येनासौ धृतदण्डः, तं-धृतदण्डं=कृतशासनम् । निपातितदण्डम् । परीक्ष्यकारिणं=विचार्यकारिणम् । धीरं=धैर्यशालिनम् । अत्यन्तं=नितराम् । नित्यम् । सेवते = आश्रयति ।

( भाषाटीका ) जो राजा अपनी इन्द्रियों व अन्तःकरण को वश में करता है दुष्टों को दण्ड देता है, विचार कर काम करता है, धैर्य रखता है, लक्ष्मी उसकी सदा सेवा करती है ॥ ५८ ॥

रथः शरीरं पुरु   राज-
आत्मानि-न्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ ५९ ॥

[ अन्वयः ] हे राजन् ! पुरुषस्य शरीरं रथः, आत्मा नियन्ता, इन्द्रियाणि च अस्य अश्वाः, तैः अप्रमत्तः कुशली धीरः—दान्तैः सदश्वैः रथीव—सुखं याति ॥

[ अर्थः ] हे राजन्=हे धृतराष्ट्र ! पुरुषस्य=पुंसः । शरीरं=वपुः । रथः=स्यन्दनः । 'रथाङ्गः स्यन्दनो रथः' इत्यमरः । आत्मा=जीवात्मा च । नियन्ता=सारथिः । इन्द्रियाणि=चक्षुरादीन्द्रियाणि । अस्य=रथस्य । अश्वाः=वाजिनः । तैः=अश्वैः । अप्रमत्तः=सावधानः । कुशली=स्वस्थः । कार्यपटुः । धीरः=धैर्यवान् । दान्तैः=विनीतैः । सन्तश्च ते अश्वाः-सदश्वाः, तैः सदश्वैः=जात्यैरश्वैः । रथीव=रथिक इव । सुखं=सुखं यथास्यात्तथा । याति=गच्छति ।

( भाषाटीका ) हे राजन् ! मनुष्य का यह शरीर रथ है, आत्मा सारथि है । इन्द्रियाँ घोड़े हैं । उन घोड़ों से-सावधान रहने वाला शिक्षित कुशल, धैर्यवान् विद्वान्—शिक्षित घोड़ों से जैसे रथी जाता है वैसे ही-आनन्द से अपने गन्तव्य मार्ग को पार करता है ॥ ५९ ॥

एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवाऽदान्ता हयाः पथि कुसारथिम् ॥ ६० ॥

[ अन्वयः ] अनिगृहीतानि एतानि—अविधेयाः अदान्ताः हयाः पथि कुसारथिं इव व्यापादयितुम् अपि अलम् ॥

[ अर्थः ] अनिगृहीतानि=असंयतानि । अवशीकृतानि । एतानि=इन्द्रियाणि तु । अविधेयाः=अवशीभूताः । अविनीताः । 'विधेयो वचनग्राही'त्यमरः । अदान्ताः=अशान्ताः । समुद्धताः । हया इव=अश्वाः । पथि=मार्गे । कुत्सितः सारथिः

कुसारथिः, तं कुसारथिम् इव=कुयन्तारमिव । व्यापादयितु-मपि=विनाशयितुमपि । अलं=समर्थानि भवन्ति ।

( भाषा ) ये इन्द्रियां यदि वशीभूत न हों तो अनियन्त्रित घोड़ों की तरह अयोग्य सारथि ( मन ) को गड्ढे में गिराकर विनष्ट कर दे सकती हैं अतः इन इन्द्रियों को वश में ही रखना चाहिए ॥ ६० ॥

**अनर्थमर्थतः पश्यन्नर्थं चैवाऽप्यनर्थतः ।**
**इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६१ ॥**

[ अन्वयः ] बालः अजितैः इन्द्रियैः अर्थतः अनर्थम् अनर्थतः अर्थं चैव पश्यन् सुदुःखं सुखं मन्यते ॥

[ अर्थः ] बालः=अविवेकी जडः । न जितैः—अजितैः= अवशीकृतैः । इन्द्रियैः=चक्षुरादिभिः । अर्थतः=अर्थात् । अर्थ-हेतोः । कल्याणकारकात् । अनर्थम्=अनिष्टम् । पापम् । अनिष्ट-जनकं विषयोपभोगादिकञ्च । अनर्थात्=अन्यायतः । अर्थञ्चैव= धनादिकञ्चैव । कल्याणञ्चैव । पश्यन्=वितर्कयन् । विभावयन् । सुदुःखं=नितरां दुःखमपि । सुखं=सुखमिति । मन्यते=जानाति ।

( भाषा ) अविवेकी लोग इन्द्रियों के वशीभूत हो कल्याणकारी को अनर्थकारी समझकर, अनर्थ (अन्याय) को अर्थ (कल्याण) कारी समझते हुए दुःख उठाते हैं। (या इन्द्रियों के वशीभूत लोग अर्थ को अनर्थ अनर्थ को अर्थ दुःख को सुख समझते हैं) ।

**धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।**
**श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६२ ॥**

[ अन्वयः ] यः धर्मार्थौ परित्यज्य इन्द्रियवशानुगः स्यात् सः श्री-प्राणधनदारेभ्यः क्षिप्रं परिहीयते ॥

[ विग्रहः ] श्रियश्च प्राणाश्च धनानि दाराश्च श्रीप्राणधनदाराः, तेभ्यः-श्रीप्राणधनदारेभ्यः । धर्मश्च अर्थश्च धर्मार्थौ ।

[ अर्थः ] यः=पुमान् । धर्मार्थौ=अर्थधर्मौ । परित्यज्य=वि-हाय । इन्द्रियाणां वशमिच्छामनुगच्छतीति इन्द्रियवशानुगः= इन्द्रियेच्छापरवशः । स्यात्=भवेत् । सः=स पुमान् । श्री-प्राणधनदारेभ्यः=सम्पत्प्राणवित्तकलत्रेभ्यः । क्षिप्रं=त्वरितमेव । परिहीयते=परित्यज्यते ।

( भाषा ) जो मनुष्य धर्म व धन की उपेक्षा कर इन्द्रियपरायण होता है उसकी सम्पत्ति व प्राण धन व स्त्री आदि सब नष्ट हो जाते हैं। ६२ ॥

**अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।**
**इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६३ ॥**

[ अन्वयः ] यः अर्थानाम् ईश्वरः ( अपि ) इन्द्रियाणाम् अनीश्वरः स्यात् सः हि इन्द्रियाणाम् अनैश्वर्यात् ऐश्वर्यात् भ्रश्यते ॥

[ विग्रहः ] ईश्वरस्य भावः ऐश्वर्यं, न ऐश्वर्यम् अनैश्वर्यम्। तस्मात्-अनैश्वर्यात्।

[अर्थः] यः=यः पुमान्। अर्थानां=धनानाम्। ईश्वरः=स्वामी सन्नपि। इन्द्रियाणां=चक्षुरादीन्द्रियाणाम्। न ईश्वरः-अनीश्वरः =असमर्थः। स्यात्=भवेत्। स हि=स हि पुमान्। इन्द्रियाणामनैश्वर्यात्=इन्द्रियाणामप्रभुत्वात्। इन्द्रियाणामनिग्रहात्। ऐश्वर्यात्=प्रभुत्वात्। धनात्। भ्रश्यते=परिहीयते।

[ भावार्थः ] इन्द्रियपरस्य तस्य धनं नश्यति।

(भाषाटीका) जो धनी-धनका मालिक होकर भी इन्द्रियों का मालिक नहीं होता है ( इन्द्रियों को वश में नहीं रखता है ) उसका धन शीघ्र ही नष्ट हो जाता है ॥६३॥

**आत्मनात्मानमन्विच्छन्मनोबुद्धीन्द्रियैर्यतैः ।**
**आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६४ ॥**

[अन्वयः] यतैः मनोबुद्धीन्द्रियैः आत्मना आत्मानम् अन्विच्छेत्, हि आत्मा एव आत्मनः बन्धुः, आत्मा एव आत्मनः रिपुः ॥

[ अर्थः ] यतैः=संयतैः। सङ्कल्पात्मकं मनश्च, तन्मूलभूता बुद्धिश्च, इन्द्रियाणि च मनोबुद्धीन्द्रियाणि, तैः=चित्त—बुद्धीन्द्रियैः। आत्मना=बुद्ध्या। आत्मानं=प्रत्यक्चैतन्यम्। स्वम्। अधिष्ठातारम्। अन्विच्छेत्-ज्ञातुमिच्छेत्। हि=यतः। आत्मैव =अन्तःकरणमेव। आत्मनः=अधिष्ठातुः। बन्धुः=सहायकः। आत्मैव=अन्तःकरणमेव च। आत्मनः=चिदात्मनः। रिपुः= शत्रुः। बुद्ध्याद्यन्तःकरणजय एव पुरुषार्थ इत्याशयः।

( भाषा ) वश में किए हुए मन बुद्धि व इन्द्रियों से बुद्धि द्वारा आत्मा (ब्रह्म) की खोज करनी चाहिए, क्योंकि आप ( अन्तःकरण ) ही आप का मित्र व आप ही आप का शत्रु है। अर्थात् विचार द्वारा ब्रह्म प्राप्ति कराने से तो वह मित्र है आत्मविचार न करने से वह शत्रु है ॥ ६४ ॥

**बन्धुरात्माऽऽत्मनस्तस्य येनैवाऽऽत्माऽऽत्मना जितः ।**
**स एव नियतो बन्धुः स एव नियतो रिपुः ॥ ६५ ॥**

[ अन्वयः ] येन एव आत्मना आत्मा जितः तस्य आत्मा आत्मनः बन्धुः । सः एव नियतः बन्धुः सः एव नियतः रिपुः ॥

[ अर्थः ] येनैव=येनैव पुंसा । आत्मना=अन्तःकरणेन । आत्मा=परमात्मा । जितः=लब्धः । तस्य=तस्य पुंसः । आत्मा=अन्तःकरणम् । मनोबुद्धिचित्ताहङ्काराख्यम् । आत्मनः=जीवस्य । बन्धुः=सखा भवति । स एव=मनोबुद्ध्यादिरेव । नियतः=निश्चितः । बन्धुः=सुहृत् । स एव=मनोबुद्ध्यादिरेव । नियतः=ध्रुवः । रिपुः=शत्रुः ।

( भाषा ) जिसने अन्तःकरण की सहायता से आत्मज्ञान प्राप्त किया है उसका आत्मा (अन्तःकरण) तो उसका मित्र है जिसने नहीं किया है उसका आत्मा उसका वैरी है। अर्थात् वही मित्र है और वही वैरी है ॥ ६५ ॥

**[1]क्षुद्राक्षेणेव जालेन झषावपिहितावुरू ।**
**कामश्च राजन् ! क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६६ ॥**

[ अन्वयः ] हे राजन् ! क्षुद्राक्षेण जालेन अपिहितौ उरू झषौ इव कामः क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥

[ अर्थः ] क्षुद्राणि अक्षीणि यस्य तत् क्षुद्राक्षम्, तेन—क्षुद्राक्षेण=स्वल्पछिद्रेण । सूक्ष्मविवरेण । जालेन=बुद्धिजालेन । आनायेन । अपिहितौ=आवृतौ । उरू=महान्तौ । झषौ इव=

---

१ केचित्तु—'क्षुद्राक्षेणे'ति 'स एव नियतो बन्धु'रित्यादिना पूर्वेणान्वेति । जालेन=मोहजालेन । धीश्चिदात्मन संसारप्रदत्वाच्छत्रुरपि मोहजालच्छेदार्थं मित्रमपि भवति । यथा मीनौ जातिस्वभावात्परस्परं वैरिणावपि जालच्छेदाय मित्रतां गच्छतः । ततः 'कामः क्रोधश्चे'त्यर्द्धं तु पृथगित्येवमर्थमाहुः ।

मत्स्याविव । कामश्च=अभिलाषश्च । 'कामोऽभिलाषस्तर्षश्च'-त्यमरः । क्रोधश्च=कोपश्च । तौ=तावेतौ । प्रज्ञानं=बुद्धिम् । विलुम्पतः=विनाशयतः ।

( भाषा ) हे राजन् ! छोटे छेदवाले जाल में फँसी हुई बड़ी मछलियाँ जैसे उसे फाड डालती हैं वैसे ही काम और क्रोधरूपी दो बड़े मत्स्य ज्ञानरूपी जाल को छिन्न भिन्न कर देते हैं । अतः काम क्रोध से सावधान रहना चाहिये ॥ ६६ ॥

**समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति ।**
**स वै सम्भृतसम्भारः सततं सुखमेधते ॥ ६७ ॥**

[ अन्वयः ] इह यः धर्मार्थौ समवेक्ष्य सम्भारान् अधिगच्छति सः वै सम्भृतसम्भारः सन् सततं सुखम् एधते ॥

[ अर्थः ] इह=जगति । यो नरः । धर्मार्थौ=अर्थधर्मौ । समवेक्ष्य=अनुरुध्य । दृष्ट्वा । धर्मार्थावनुपालयन् । सम्भारान्=जयसाधनानि । जयसामग्रीः । अधिगच्छति=प्राप्नोति । सवै=स पुमान् । सम्भृताः सम्भारा यस्यासौ सम्भृतसम्भारः=संगृहीतविजयसाधनः । सततं=निरन्तरम् । सुखं=सुखं यथा स्या-त्तथा । एधते=वर्द्धते ।

( भाषा ) जो राजा धर्म और अर्थ की रक्षा का विचार रखता हुआ विजय के साधक उपायों ( विजय यात्रा आदि ) को करता है वह सदा सुखी होता है, एवं वृद्धि को प्राप्त होता है ॥ ६७ ॥

**यः पञ्चाभ्यन्तराञ्छत्रूनविजित्य मनोमयान्[1] ।**
**जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥ ६८ ॥**

[ अन्वयः ] यः मनोमयान् आभ्यन्तरान् पञ्च शत्रून् अविजित्य अन्यान् रिपून् जिगीषति तं रिपवः अभिभवन्ति ॥

[ अर्थः ] यः=यो राजा । मनसो विकाराः मनोमयाः, तान् मनोमयान्=मानसान् । मनोविकारभूतान् । आभ्यन्तरान्=शरीरमध्यवर्तिनश्चक्षुरादीन् इन्द्रियाख्यान् पञ्चसङ्ख्याकान् । शत्रून्=रिपून् । अविजित्य=अवशीकृत्यैव । अन्यान्=पञ्चेन्द्रिया-

[1] 'मनसा ह्येव पश्यति मनसा शृणोति' इति हि-श्रुतिः ।

तिरिक्तान् बाह्यान्। रिपून्=शत्रून्। जेतुमिच्छति जिगीषति=विजेतुमिच्छति। तं=तादृशं पुमांसम्। रिपवः=शत्रवः। अभि-भवन्ति=पराभवं नयन्ति।

( भाषा ) जो राजा अपने शरीर में मन के अधीन रहने वाले श्रोत्र आदि पाँच प्रबल शत्रुओं को जीते विनाही बाहरी शत्रुओं को जीतना चाहता है वह शत्रुओं द्वारा पराजित हो जाता है॥ ६८॥

**दृश्यन्ते हि महात्मानो वध्यमानाः स्वकर्मभिः।**
**इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः॥ ६९॥**

[ अन्वयः ] महात्मानः राजानः (अपि) इन्द्रियाणाम् अनीशत्वात् राज्यविभ्रमैः स्वकर्मभिः वध्यमानाः दृश्यन्ते हि॥

[ अर्थः ] महानात्मा येषान्ते महात्मानः=महानुभावाः। महान्तः। मनस्विनः। राजानः=नृपा रावणादयोऽपि। इन्द्रियाणामनीशत्वात्=इन्द्रियाणामप्रभुत्वात्। राज्यस्य विभ्रमाः राज्यविभ्रमाः, तैः-राज्यविभ्रमैः=राजलक्ष्मीविलासैः। राज्यैश्वर्यादिमदैः। स्वकर्मभिः=स्वकृत्यैः सीताहरणादिभिः। वध्यमानाः=पीड्यमानाः। क्लिश्यन्तः। दृश्यन्ते हि=विभा-व्यन्ते हि। श्रूयन्ते हि।

( भाषा ) इन्द्रियों के वशीभूत हुए बड़े २ राजा राज्य व ऐश्वर्य के घमण्ड से क्लिष्ट गए अपने दुष्कर्मों के कारण विनाश को प्राप्त हुए देखे गए हैं। जैसे सीताहरण के कारण रावण॥ ६९॥

**असन्त्यागात्पापकृतामपापां-**
**स्तुल्यो दण्डः स्पृशते मिश्रभावात्।**
**शुष्केणाऽऽर्द्रं दह्यते मिश्रभावा-**
**त्तस्मात्पापैः सह सन्धिं न कुर्यात्॥७०॥**

[ अन्वयः ] पापकृताम् असन्त्यागात् मिश्रभावात् अपापान् तुल्यः दण्डः स्पृशते। आर्द्रं शुष्केण मिश्रभावात् दह्यते। तस्मात् पापैः सह सन्धिं न कुर्यात्॥

[ अर्थः ] पापं कुर्वन्तीति पापकृतः, तेषां पापकृताम्=दुरा-

चाराणाम्। दुष्टानाम्। असन्त्यागात्=अपरित्यागात्। सम्पर्कात्। मित्रस्य भावो मित्रभावस्तस्मात् मित्रभावात्=मैत्रीरूपात्सम्बन्धात्। न विद्यते पापं येषु ते अपापाः, तान्=पापरहितान्। निर्दोषानपि। तुल्यः=पापैस्तुल्यः। दण्डः=राजदण्डः। स्पृशते=निपतति। आर्षमात्मनेपदम्। यतः आर्द्रं=क्लिन्नं काष्ठादि। शुष्केण=अनार्द्रेण काष्ठादिना सह। मिश्रभावात्=सम्बन्धात्। दह्यते=अग्नौ भस्मीभवति। तस्मात्=तस्मात्कारणात्। पापैः सह=पापिभिः सह। सन्धिं=सम्बन्धं। मैत्रीम्। न कुर्यात्=न विदध्यात्।

(भाषा) पापियों के सम्बन्ध से पापरहित लोग भी राजदण्ड (सजा) भोगते हैं। क्योंकि सूखी लकड़ी के साथ गीली लकड़ी भी जल जाती है। अतः दुष्टों के साथ सम्बन्ध न रखे ॥ ७० ॥

**निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान्।**
**यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७१ ॥**

[ अन्वयः ] यः उत्पततः पञ्चप्रयोजनान् निजान् पञ्च शत्रून् मोहात् न निगृह्णाति तं नरम् आपत् ग्रसते ॥

[ अर्थः ] यः=यः पुमान्। उत्पततः=उत्पथेन गच्छतः। उद्गच्छतः। प्रवर्द्धमानान्। पञ्च प्रयोजनानि येषान्ते पञ्चप्रयोजनाः, तान्-पञ्चप्रयोजनान्=शब्दादिपञ्चार्थोद्देश्येन प्रवृत्तान्। निजान्=स्वीयान्। पञ्च शत्रून्=पञ्चसङ्ख्याकान् इन्द्रियाख्यान् रिपून्। मोहात्=अज्ञानात्। न निगृह्णाति=न निरुणद्धि। तं नरं=तस्पुरुषम्। आपत्=विपत्तिः। ग्रसते=अभिभवति। व्याप्नोति।

(भाषा) जो मनुष्य बुरे मार्ग पर चलने वाले उभड़ते हुए पाँच विषयों के ग्राहक अपने पाँच शत्रुओं (चक्षु श्रोत्र आदि पाँच इन्द्रियों) को अज्ञानवश नहीं दबाता है वह विपत्ति में पड़कर दुःख भोगता है ॥ ७१ ॥

**अनसूयाऽऽर्जवं शौचं सन्तोषः प्रियवादिता।**
**दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ७२ ॥**

[ अन्वयः ] दुरात्मनाम् अनसूया आर्जवं शौचं सन्तोषः प्रियवादिता दमः सत्यम् अनायासः-( एतानि ) न भवन्ति ॥

[ अर्थः ] दुरात्मनां=दुष्टानाम् । न असूया अनसूया=परगुणदोषदर्शित्वाऽभावः । परगुणेष्वादरः । आर्जवं=सरलता । शौचं=शुद्धिः । सन्तोषः=तृप्तिः । प्रियं वदति तच्छीलः प्रियवादी, तस्य भावः प्रियवादिता=मधुरभाषिता । दमः=इन्द्रियनिग्रहः । सत्यं=सत्यभाषिता । न आयासः अनायासः=स्थिरचित्तता । सुखं वा । ( एतानि दुरात्मनां=पापिनाम् ) । न भवन्ति=न जायन्ते ।

( भाषा ) दूसरे के गुणों का आदर, सरलता, सफाई, स्वच्छता, सन्तोष, मधुरभाषण, इन्द्रियनिग्रह, सत्यभाषण, स्थिर चित्त व सुख ये गुण पापियों में नहीं होते अर्थात् ये सब सज्जनों के लक्षण हैं ॥ ७२ ॥

**आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।**
**वाक् चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ! ॥७३॥**

[ अन्वयः ] भारत ! अन्त्येषु आत्मज्ञानम् अनायासः तितिक्षा धर्मनित्यता वाक् चैव गुप्ता दानं च एतानि न [ भवन्ति ] ॥

[ अर्थः ] भारत=हे भरतवंशमणे ! । अन्त्येषु=नीचेषु । आत्मनः ज्ञानम् आत्मज्ञानम्=आत्मावबोधः । तत्त्वज्ञानम् । न आयासः अनायासः=अचाञ्चल्यम् । स्थिरचित्तता । तितिक्षा=सुखदुःखादिद्वन्द्वसहिष्णुता । धर्मे नित्यो धर्मनित्यः, तस्य भावो धर्मनित्यता=दृढा धार्मिकता । धर्मे दृढोऽनुरागः । गुप्ता=सुरक्षिता । वाक्=वाणी । अल्पभाषिणी वाणी । दानं च=विसर्गश्च । एतानि=इमानि । न भवन्ति=न लभ्यन्ते ।

( भाषा ) हे राजन् ! नीच पुरुषों में-आत्मज्ञान, स्थिरचित्तता, सहनशीलता, दृढधार्मिकता, कम बोलने वाली वाणी ( अल्पभाषिता ), और दान-ये गुण नहीं होते । अर्थात् ये गुण उत्तम पुरुषों में ही होते हैं ॥ ७३ ॥

**आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।**
**वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७४ ॥**

[ अन्वयः ] अबुधाः आक्रोशपरिवादाभ्याम् बुधान् विहिंसन्ति, वक्ता पापम् उपादत्ते, क्षममाणः विमुच्यते ॥

[विग्रहः] न बुधाः—अबुधाः । आक्रोशश्च परिवादश्च आक्रोशपरिवादौ, ताभ्याम् आक्रोशपरिवादाभ्यां । क्षमते इति क्षममाणः ।

[अर्थः] अबुधाः=मूर्खाः । आक्रोशपरिवादाभ्यां=कठोरवचन-निन्दावचोभ्याम् । निन्दाकलङ्काभ्याम् । बुधान्=पण्डितान् । सज्जनान् । विहिंसन्ति=परिपीडयन्ति । तत्र—वक्ता=निन्दकः । पापं=दुष्कृतम् । निन्दाजन्यं पापं, परकृतं वा । उपादत्ते=गृह्णाति । क्षममाणः=परकृतानाधिक्षेपान् सहमानस्तु । विमुच्यते=पापाद्विमुच्यते । स्वकृतादपि पापान्मुच्यते ।

( भाषा ) जो दुष्ट लोग सज्जनों की सच्ची झूठी निन्दा करते हैं व उनपर नाना प्रकार के कलङ्क लगाते हैं वेही ( उस ) पाप के भागी होते हैं निन्दा आदि सहन करने वाला तो उस पाप से छूट जाता है ॥ ७४ ॥

**हिंसा बलमसाधूनां, राज्ञां दण्डविधिर्बलम् ।**
**शुश्रूषा तु बलं स्त्रीणां, क्षमा गुणवतां बलम् ॥ ७५ ॥**

[ अन्वयः ] हिंसा असाधूनां बलं, दण्डविधिः राज्ञाम् बलं, शुश्रूषा स्त्रीणाम् बलम्, क्षमा गुणवतां बलम् ( भवति ) ॥

[अर्थः] हिंसा=प्राणिवधः। असाधूनां=दुष्टानाम् । बलं=सामर्थ्यम् । शक्तिः। कार्यसाधनोपायः । विधानं विधिः। दण्डस्य विधिः दण्डविधिः=दण्डप्रयोगः । राज्ञां=नृपाणाम् । बलं=सामर्थ्यम् । श्रोतुमिच्छा शुश्रूषा तु=परिचर्या तु।सेवा तु । स्त्रीणां=नारीणाम् । बलम् । गुणवतां=गुणिनाञ्च । क्षमा=क्षान्तिः । बलम्=शक्तिः ।

( भाषा ) दुष्टों का बल हिंसा है । राजाओं का बल ( शक्ति ) दण्ड है । स्त्रियों का बल सेवा है । गुणियों का बल-क्षमा है । ७५ ॥

**वाक्संयमो हि नृपते ! सुदुष्करतमो मतः ।**
**अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ७६ ॥**

[अन्वयः] नृपते ! वाक्संयमः सुदुष्करतमः मतः, अर्थवत् च विचित्रं च बहु भाषितुं न शक्यम् ॥

( अर्थः ) नृपते=हे राजन् । वाचः संयमः-वाक्संयमः=नियता वाक् । सार्थं सालङ्कारं च वचनम् । वाणीसंनियमनम् । अल्पभाषिता वा । दुःखेन क्रियते दुष्करः, सुष्ठु दुष्करः सुदुष्करः । अतिशयेन सुदुष्करः--सुदुष्करतमः=नितरां दुष्करः । मतः=विदितः । प्रसिद्धः । प्रशस्ता अर्था सन्त्यस्मिन् तत्--अर्थवत्=प्रशस्तार्थकम् । विचित्रञ्च=अद्भुतञ्च । चमत्कारकारि च । बहु=विपुलम् । भाषितुं=वक्तुम् । न शक्यं=नैव शक्यम् ।

(भाषा) हे राजन् ! वाणी का संयम ( परिष्कार ) बड़ा कठिन है क्योंकि सुन्दर २ अर्थों से भरा हुआ व चमत्कारी भाषण सहज नहीं है । अतः ज्यादा बोलना प्रायः निरर्थक ही होता है ॥ ७६ ॥

**अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।**
**सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७७ ॥**

[ अन्वयः ] राजन् ! सुभाषिता वाक् विविधं कल्याणम् अभ्यावहति, सा एव दुर्भाषिता—अनर्थाय उपपद्यते ।

( अर्थः ) राजन्=हे धृतराष्ट्र । सुष्ठु भाषिता=सुभाषिता=सुन्दरतरमुक्ता । सूक्ता । वाक्=वाणी । विविधं=नानाविधम् । कल्याणं=शुभम् । 'कल्याणं मङ्गलं शुभ'मित्यमरः । विविधमिति सुभाषितविशेषणं वा । अभ्यावहति=निष्पादयति । ददाति । सैव=सा वागेव । दुष्ठु भाषिता-दुर्भाषिता=दुरुक्ता सती । अनर्थाय=अशुभाय । अमङ्गलाय । उपपद्यते=कल्पते । समर्था भवति ।

( भाषा ) हे राजन् ! उत्तम प्रकार से कहे गए वचन कल्याणकारक होते हैं, और अनुचित प्रकार से कहे गए वचनों से अनर्थ अमङ्गल व अनिष्ट ही होता है ॥७७॥

**रोहते सायकैर्विद्धं वनं परशुना हतम् ।**
**वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७८ ॥**

[ अन्वयः ] सायकैः विद्धं, परशुना हतं वनं रोहते, वाचा दुरुक्तं बीभत्सं वाक्क्षतं न संरोहति ॥

( अर्थः ) सायकैः-बाणैः। विद्धं-विक्षतम्। किञ्च परशुना=परश्वधेन। हतं=भिन्नम्। छिन्नं वा। वनं=विपिनम्। रोहते=प्ररोहति। पुनरुद्भवति। अङ्कुरमासादयति। छान्दसत्वादात्मनेपदम्। वाचा=वाण्या। दुरुक्तं दुरुक्तं=दुर्भाषितम्=दुष्टं वचः। बीभत्सं=जुगुप्सितं। निन्दितम्। वाचा क्षतं-वाक्क्षतं=वाणीव्रणः। वाक्प्रहारः। वाक्कृतो व्रणो वा। न संरोहति=न प्ररोहति।

( भाषा ) बाण ( बर्छी तलवार भाला आदि ) का घाव भी समय पाकर कदाचित् भर जाता है, फरसे (कुदाड़े) से काटा गया वनभी फिर हरा-भरा हो जाता है परन्तु बुरे व तीखे मर्मभेदी वचनों से किया हुआ बीभत्स ( बुरा ) घाव कभी नहीं-भरता है। अतः किसीको तीक्ष्ण व कडुवे वचन नहीं कहना चाहिए ॥ ७८ ॥

**कर्णि-नालीक-नाराचान्निर्हरन्ति शरीरतः।**
**वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥७९॥**

[ अन्वयः ] ( जनाः- ) शरीरतः कर्णिनालीकनाराचान् निर्हरन्ति, वाक्शल्यः तु निर्हर्तुं न शक्यः। हि स हृदिशयः ॥

[ अर्थः ] ( जनाः=शस्त्रविद्यापारङ्गताः कुशला लोकाः )। शरीरतः=देहात्। कर्णिनश्च नालीकाश्च नाराचाश्च—कर्णिनालीकनाराचाः, तान्-कर्णिनालीकनाराचान्=कर्णाकृतिफलवद्बाण-नालिकास्त्रोद्गतगुलिकादि-लोहमयबाणान्। निर्हरन्ति=निःसारयन्ति। निष्कासयन्ति। वागेव शल्यः—वाक्शल्यः=वाक्कण्टकन्तु। न=नैव। निर्हन्तुं=निस्सारयितुम्। शक्यः=शक्यते। हि=यतः। स=वाक्शल्यः। हृदि शेते हृदिशयः=हृद्गतो भवति। हृद्गतश्च शल्यो न केनाप्युद्धर्तुं शक्यते, प्राणहारकत्वादिति शल्यतन्त्रविदो वदन्ति।

१ 'कर्णी कर्णाकृतिफलो, नालीको नालिकोद्गतः। नाराचः सर्वलौहः स्यात्' इति शस्त्रशास्त्रविदः।

(भाषा) कर्णी (अङ्कुश की तरह टेढ़ा बाण, जिसके साथ अन्तड़ियाँ बाहर निकल आती हैं), नालीक ( बन्दूक की गोली या बन्दूक आदि से छोटे गए बाण व छर्रे ) नाराच ( पूरे २ लोहे से बने बाण ) भी कुशल लोगों के द्वारा शरीर के भीतर से निकाल लिए जाते हैं, परन्तु वाणी रूपी शल्य (भाला व कांटा) को तो कोई नहीं निकाल सकता है, क्योंकि वह तो हृदय में चुभा हुआ रहता है। ( हृदय के पास का बाण आदि नहीं निकल सकता, क्योंकि इसके निकालने से तुरन्त मृत्यु हो जाती है ) ॥ ७९ ॥

वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति राज्यहानि ।
परस्य नाऽमर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेभ्यः ॥

[ अन्वयः ] वाक्सायकाः वदनात् निष्पतन्ति यैः आहतः राज्यहानि शोचति, ते परस्य अमर्मसु न पतन्ति, पण्डितः परेभ्यः तान् न अवसृजेत् ॥

[ अर्थः ] वाच एव सायकाः-वाक्सायकाः=वाग्बाणाः । वाक्शराः । वदनात्=मुखात् । निष्पतन्ति = निर्गच्छन्ति । निस्सरन्ति । यैः-यैश्च वाक्सायकैः । आहतः=ताडितः । विद्धः पुमान् । राज्यहानि=अहोरात्रम् । शोचति=शोकं करोति । ते=वाग्बाणाः । परस्य=अन्यस्य । अधिक्षिप्तस्य । अमर्मसु=मर्मातिरिक्तेषु स्थानेषु । न पतन्ति=न विनिष्पतन्ति । अतो मारयन्ति । अतः- पण्डितः=विद्वान् । तान्=वाक्सायकान् । परेभ्यः = अन्येभ्यः । शत्रुभ्योऽपि । नावसृजेत्=न विमुञ्चेत् । न प्रयुञ्जीत ।

( भाषाटीका ) मुख से वाणी रूप जो बाण निकलते हैं वे बाण मर्मस्थल (हृदय) पर ही आघात करते हैं। अतः पण्डित को चाहिए कि-दूसरों पर इन ( वाक्य बाणों ) का प्रयोग कभी न करें। क्योंकि ये प्राणघातक होते हैं । ८० ॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्याऽपकर्षन्ति सोऽवाचीनानि पश्यति ॥

[ अन्वयः ] देवाः यस्मै पुरुषाय पराभवं प्रयच्छन्ति तस्य बुद्धिम् अपकर्षन्ति । सः अवाचीनानि पश्यति ॥

( अर्थः ) देवाः=विबुधाः । यस्मै पुरुषाय=यस्मै पुंसे । परा-

भवं=पराजयम्। प्रयच्छन्ति=ददति । दातुमिच्छन्ति । तस्य=तस्य पुंसः। बुद्धिं=मतिम्। अपकर्षन्ति=हरन्ति। सः=अपहृतमतिर्दैवहतः पुमान् । अवाचीनानि=निकृष्टानि। नीचान्येव। दुष्कर्माणि। पश्यति=अनुसरति । आश्रयति । विचारयति। अवलोकते। करोति वा।

( भाषा ) देवता लोग जिसका पराभव करना चाहते हैं उसकी बुद्धि को ही हर लेते हैं। जिससे वह उल्टा ही देखने लगता है। अर्थात् अच्छे को बुरा, बुरे को अच्छा समझने लगता है, और इस प्रकार नष्ट हो जाता है ॥ ८१ ॥

**बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।**
**अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ८२ ॥**

[ अन्वयः ] बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते नयसङ्काशः अनयः हृदयात् न अपसर्पति ॥

(अर्थः)(इत्थं दैवात्)बुद्धौ=मत्याम्। कलुषभूतायां=कलुषितायाम्। भ्रष्टायाम्। विनष्टायाम्। विनाशे=नाशे। विलये। समुपस्थिते=उपस्थिते। प्रत्यासन्ने सति। नयसङ्काशः=नीतिसदृशः। नयाभासः । न नयः-अनयः=अनीतिः । हृदयात्=मानसात्। नापसर्पति=नापगच्छति। बद्धमूलो भवति ।

(भाषा) इस प्रकार दैवदुर्विपाक से जब बुद्धि बिगड जाती है, और विनाश निकट आ जाता है तब भ्रान्तिवश अनीति ही नीति मालूम होने लगती है और वही हृदय में पक्की जम जाती है, और समझाने बुझाने का भी कोई फल नहीं होता है। इस तरह वह नष्ट हो जाता है ॥ ८२ ॥

**सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ! ।**
**पाण्डवानां विरोधेन, न चैनानवबुध्यसे ॥ ८३ ॥**

[अन्वयः] भरतर्षभ । पाण्डवानां विरोधेन ते पुत्राणाम् सेयं परीता बुद्धिः [ जाता ] एनान् न च अवबुध्यसे ॥

( अर्थः ) भरतर्षभ=हे धृतराष्ट्र। पाण्डवानां=पाण्डुपुत्राणाम्। विरोधेन=वैरेण। तेन दोषेण । ते=तव पुत्राणां=सुतानां।

दुर्योधनादीनाम् । सेयं=पाण्डवविरोधरूपा । परीता=विपरीता, नयतुल्या । अनया । बुद्धिः=मतिः । जातेति शेषः । "बुद्धिः=अनया मतिः । परीता=व्याप्ते"त्यर्थो वा । एतान्=बुद्धिभ्रष्टान् । स्वपुत्रान् । न च=नैव । अवबुध्यसे=जानासि ।

( भाषा ) हे राजन् ! पाण्डवों के विरोध के कारण तुम्हारे पुत्र उसी अनीति से बुद्धिभ्रष्ट हो रहे हैं । और आप भी इसे समझ नहीं रहे हैं और अपने पुत्रों को समझाते नहीं हैं ॥ ८३ ॥

**राजा लक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत् ।**
**शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र ! युधिष्ठिरः ॥**

[ अन्वयः ] धृतराष्ट्र ! लक्षणसम्पन्नः यः त्रैलोक्यस्य अपि राजा भवेत् ते शिष्यः सः युधिष्ठिरः शासिता अस्तु ॥

[ अर्थः ] धृतराष्ट्र=हे राजन् ! । लक्षणैः सम्पन्नः लक्षणसम्पन्नः=सर्वशुभलक्षणान्वितः । यः=युधिष्ठिरः । त्रैलोक्यस्यापि=त्रिभुवनस्यापि । राजा=नृपः । भवेत्=स्यात् । ते=तव । शिष्यः=शासनार्हः । प्रियशिष्यः । स युधिष्ठिरः=स धर्मपुत्रः । शासिता = राजा । अस्तु=भवतु ।

( भाषा ) अतः हे राजन् ! सब राजलक्षणों से युक्त, त्रैलोक्य का राजा होने लायक आपके शिष्य ( आज्ञाकारी ) युधिष्ठिर को ही राजा बनाइए । ८४ ।

**अतीत्य सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।**
**तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८५ ॥**

[अन्वयः] [स हि] धर्मार्थतत्त्ववित् तेजसा प्रज्ञया च युक्तः ते सर्वान् पुत्रान् अतीत्य भागधेयपुरस्कृतः ॥

[ अर्थः ] ( स हि-) धर्मश्च अर्थश्च धर्मार्थौ, धर्मार्थयोः तत्त्वं वेत्तीति धर्मार्थतत्त्ववित्=धर्मार्थतत्त्वज्ञः । तेजसा=राजोचितेन प्रतापेन । प्रज्ञया च=बुद्ध्या च । युक्तः=समन्वितः । ( किञ्च ) ते=तव । सर्वान् पुत्रान्=सकलान् सुतान् । अतीत्य=अतिक्रम्य । भाग एव भागधेयम् । भागधेयेन पुरस्कृतः=

भागधेयपुरस्कृते=प्रथमभागीहि । राज्यार्हसौभाग्यशाली वा सौभाग्येन विराजमानः 'युधिष्ठिरो राजाऽस्तु' इति पूर्वेणान्वयः

[ कोशः ] 'भागधेयं मतं भाग्ये भागप्रत्यययोः पुमा'निति कोशः ।

( भाषा ) हे राजन्! वह युधिष्ठिर धर्म अर्थ के तत्त्व को जानने वाला है। तेज व प्रताप से युक्त है। आपके सभी पुत्रों में अधिक भाग्यशाली है, अतः उसे ही राजा बनाइए ॥ ८५ ॥

**अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।**
**गौरवात्तव राजेन्द्र ! बहून्क्लेशांस्तितिक्षति ॥ ८६ ॥**

[ अन्वयः ] हे राजेन्द्र! अनुक्रोशात् आनृशंस्यात् योऽसौ धर्मभृतां वरः युधिष्ठिरः तव गौरवात् बहून् क्लेशान् तितिक्षति ॥

[ अर्थः ] हे राजेन्द्र=हे नृपते!। अनुक्रोशात्=दयालुत्वात्। न नृशंसः अनृशंसः, तस्य भावः तत्त्वात्-आनृशंस्यात्=मृदुत्वात्। अक्रूरत्वात्। योऽसौ=यो वै त्रैलोक्यविदितः। धर्मभृतां=धर्मात्मनाम्। वरः=श्रेष्ठः। ( युधिष्ठिरः। स हि ) तव=भवतः। गौरवात्=गुरुत्वात्। त्वय्यादरादेव। बहून्=नानाविधान् त्वत्पुत्रादिप्रदत्तान्। क्लेशान्=दुःखानि। दुःखप्रदानपराधांश्च। तितिक्षति=सहते। [ 'अतः स ते शिष्यो युधिष्ठिरो राजाऽस्तु' इति पूर्व ८४ श्लोकेन सहाऽस्यान्वयो बोध्यः ]।

( भाषाटीका ) हे राजेन्द्र! वह युधिष्ठिर दयालु और मृदुस्वभाव होने से एवं आप में पूज्य बुद्धि रखने से ही नाना प्रकार का कष्ट सहन कर रहा है और आपका आज्ञाकारी बना हुआ है अतः उसे ही राजा बनाइए ॥ ८६ ॥

इति श्रीगुरुप्रसादशास्त्रिविरचिता विदुरनीतिद्वितीयाध्यायटीका ।

[ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥

द्विजातिरेवात्राऽधिक्रियते नान्यः ।

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् । मनुः] ।

---

भार्गवभूषण प्रेस, गायघाट, बनारस ।